श्रीः

# पंक्तिप्रभा

(प्रथम खण्डः)

व्याकरणन्यायाचार्य्य पण्डितप्रवरं श्रीसूर्य्य-
नारायण सुकुल शर्म्मभिर्निर्माप्य ।

---

अयोध्यास्थ राजगोपालपाठशाला प्रधानाध्यापक
व्याकरणाचार्य्य न्यायशास्त्री श्री पं० रुद्र-
प्रसादावस्थि शर्म्मभिः शोधयित्वा ।

---

[illegible]ारकर चन्द्रभालमणि त्रिपाठिभिः

श्रीसीताराम यन्त्रालये श्रीगिरिजादयालु द्वारा
संमुद्र्य प्रकाशितः ।

१९२९

प्रथमावृत्तौ १०००] मूल्यम् ॥)

श्रीः

अयि सहृदयामहोदयाः !

सिद्धान्तकौमुदी फक्किकाप्रकाशकाबहवोग्रन्था मुद्रिताः तथाप्यस्याअवलोकनमावश्यकम् किं मधुररसैरुद्वेजितानामाम्लरसे प्रवृत्तिर्नभवतीति पुनः पुनः प्रतिपादयति ।

व्या० आ० वे० शा०
रानूपाली प्रधानाध्यापकः
सहदेव झा शास्त्री ।

पुस्तक प्राप्तिस्थानम्ः—
मैनेजर,
संस्कृत विद्वत्कालेज—अयो

. * श्रीवायुसूनवेनमः *

# पंक्तिप्रभा।

जनकतनयकान्तां वीक्ष्यमन्दस्मितेन,
विकसितमुखपद्मे शोभमानद्विजानाम्।
विजित रविशशीनां शुभ्र "पंक्ति प्रभेयम्,"
जनहृदयनिकुञ्जे मोदमाना विभातु ॥ १ ॥

प्रारब्धग्रन्थनिर्विघ्न परिसमाप्तये शिष्टाचारानुमितश्रुतिबोधि
र्तव्यताक मङ्गलमाचरन् अवश्य वक्तव्यान् अधिकारि विषयप्रयोजन
बन्धान् निर्दिशन्ति मुनित्रयमित्यादिना। तत्र पूर्वार्धेन मङ्गलाचर-
म् ॥ उत्तरार्धेनानुबन्धचतुष्टयप्रदर्शनमितिविवेकः। तत्रवैयाकरण
द्धान्ताःविषयाः तज्ज्ञानंप्रयोजनम् तज्जिज्ञासुरधिकारी प्रतिपाद्य
तपादकभावरूप संबन्धः स्फुटत्वान्नोक्त ॥

ननु अ इ उ ण् इत्यादौ वर्णात्कार इत्यनेनकार प्रत्ययोदुर्वार
ति चेन्न। तत्र रोगाख्यायां ण्वुल् वहुलमित्यतो वहुलग्रहणानुवृत्तौ
हुलकात् कारप्रत्याप्रवृतेः। न च संहिताकार्यं दुर्वारमितिवाच्यम्।
संहिताया अविवक्षितत्वात्। प्रत्येकवर्णेभ्यो विभक्तिरुत्पतिरपिन"
अकारादीनामनुकरणत्वेनानुकार्यानुकरणयोरभेदविवक्षायामनुकरणा
सामर्थवत्वाभावेनप्रातिपदिकत्वाभावात्। नचविभक्त्यभावेपदत्वा
भावादपदन्नप्रयुञ्जीदिति न्यायविषयता इति वाच्यम्। अपदमि-
त्यस्य परनिष्ठितमित्यर्थेनानुकरणानां परिनिष्ठितत्वात्। अतएव नि-
र्विभक्तिक भू इत्यादि निर्देशः संगच्छते ॥१॥

ननूपदेशार्थं वर्णानामुच्चारणेन हकारस्यद्विरुच्चारणंव्यर्थमिति
न। प्रयोजनार्थमपि वर्णानामुच्चारणस्यसत्वात्। तत्रप्रथमहकारस्य-
प्रयोजनं देवोहसतीत्यादावुत्वसिद्धिःद्वितीयस्यचरुदिहीत्यादौवलादि
लक्षण इट्सिद्धिः ॥२॥

ननु आम्नायसमाम्नाय शब्दयोः वेदे एवप्रसिद्धत्वात् चतुर्दशसूत्र्यां तत्व्यवहारोऽयुक्तः, अतआहइमानि माहेश्वराणीति महेश्वरादागतानीतितदर्थः । एवञ्च एवमानुपूर्वीका श्रुतिरेवैषा अतएवएषांपाठे सर्ववेदपारायणपुण्यमुक्तम् महेश्वरादागतत्वेमानञ्च येनाक्षरसमाम्नायमधिगम्यमहेश्वरात् । कृत्स्नं व्याकरणं प्रोक्तमिति शिक्षावचनम् ॥३॥

## लण्सूत्रेऽकारश्चेति ।

इत्संज्ञकः इतितदर्थः ननु अनुनासिकानामचामित्संज्ञायाः सत्वेनानुनासिकपाठस्येदानीं परिभ्रष्टत्वेनच लण्सूत्रघटकाकारस्यानुनासिकत्वेमानाभाव इतिचेन्न । तुल्यास्यसूत्रेभाष्ये लपरत्वंवक्ष्यामीत्यनेनभाष्येणानुनासिकत्वस्य ध्वनितत्वात् । अयम्भावः वक्ष्यामीत्यस्य व्याख्यास्यामीत्यर्थः कैयटेनकृतः व्याख्याच लण्सूत्रेऽकारस्यानुनासिकत्वं प्रतिज्ञायतस्येत्वे आदिरन्त्येनेति रप्रत्याहारसिद्धिरूपाः एवञ्चोरण्रपर इति सूत्रे प्रत्याहारबोधकरपदेन रकारलकारयोर्बोधादान्तर्तम्यात् ऋकारस्थानिकोरपरः लृकारस्थानिकोलपरः इत्यस्यसिद्धिः रपर इति सूत्रे लकारोच्चारणंनकार्यमितिकैयटगूढाभिप्रायः इतिदिक् ॥ ४ ॥

## हकारादिष्विति ।

ननुवर्णसमाम्नायेऽच्विशिष्ट ह इत्यादीनां पाठेन तेषामेव हलादि प्रत्याहारबोध्यत्वेन रामोयाति इत्यादावुत्वानापत्तिः किञ्च तदघटकाकारस्य हल्त्वप्रसंगोऽपीत्यत आह हकारादिष्विति । उच्चारणार्थवर्णनाञ्चनहल्त्वप्रसंगः तदुक्तंभाष्ये-'एषाहि' आचार्यस्य शैलीलक्ष्यते यत्तुल्यजातीयाँश्चतुल्यजातीयेषूपदिशति अचोऽक्षुहलोहल्सु इति ॥ ५ ॥

## हलन्त्यमिति ।

ननु नविभक्तावित्यस्यसार्थक्यायहलन्त्यमित्यस्योपदेशेऽन्त्यं हल् इत इत्यर्थस्यावश्यकत्वेन हलन्त्यमादिरन्त्येनेत्यनयोः परस्परायेः

क्षत्वेनान्योन्याश्रयापत्तिस्तथाहि वाक्यार्थवोधेपदार्थवोधस्यावश्यकत्वेन हलन्त्यमिति वाक्यार्थ वोधेहल् पदार्थज्ञानंकारणम् तज्ज्ञानंचादिरन्त्येनेतिसूत्रार्थ वोधंविनानसंभवतीति हलन्त्यमितिसूत्रे आदिरन्त्येनेत्यस्यार्थ वोधोपेक्षित . एवमादिरन्त्येनेत्यस्यार्थवोध इत् पदार्थाज्ञानंकारणम् तज्ज्ञानं च हलन्त्यमिति सूत्रार्थ वोधाधीनमिति आदिरन्त्येनेत्यस्य वोधे हलन्त्यमित्यस्यवोधोपेक्षितः। तथाच लकार इतसंज्ञामवोधयित्वा हलामित्संज्ञावोधनंपाणिनेरयुक्तमतः सूत्रावृत्या तं परिहरति। हलन्त्यमिति—तथा च प्रथमस्य हलित्सूत्रेऽन्त्यमिदित्यर्थः। तेनलस्येत्संज्ञां कृत्वा हल्पदार्थसिद्धौ द्वितीय सूत्रेणणादीनामित्संज्ञा इत्याशयेनैकमपिसूत्रंद्विधापठति हलन्त्यम् हलन्त्यमिति॥ अत्र हलन्त्यमितिसूत्रे व्यञ्जनान्तमिति न्यासः चिन्त्यः इतिसंक्षेपः॥६।

## प्रत्याहारेष्वितामिति।

ननुरलयोः संज्ञाइति अयुक्तम् टकारस्यापिमध्यगत्वेनरटलाना मित्यस्ययुक्तत्वात्। अतआह—प्रत्याहारेष्वितांनगृहणम्। इत्संज्ञकानां प्रत्याहारपदवोध्यत्वन्नास्तीत्यर्थः। चतुर्दश सूत्रीस्थानुवन्धानामादिरन्त्येनेतिसूत्रेमध्यगत्वेन नगृहणमिति यावत्।तत्रप्रमाणमाह अनुनासिक इत्यादिनिर्देशात्। अयम्भावः अनुवन्धानामपि प्रत्याहारवोध्यत्वेककारस्यापि अच्त्वे इकारस्य यण्प्रसंगः। नचककारेपरतःपदसंज्ञायांपाक्षिक हृस्वसमुच्चितप्रकृतिभावे निर्देशोपपत्तिरितिवाच्यम्। भावानुष्ठानेपुण्याधिक्यायायणघटितप्रयोगस्यैवमहर्षेरुच्चार्यत्वात्। यत्तु यचिभमितिभसंज्ञायां पदत्वाभावान्नप्रकृतिभावः इति तन्न। यकारसाहचर्येणाच्एव हल्त्वोभपयानाक्रान्तेऽच्येवभसंज्ञाविधानात्। वस्तु-तस्तु भसंज्ञायामपियस्येति चेति इकारलोपापत्तिर्दुर्वारः; न चेत्वविधान सामर्थ्यात् न यणादि कार्यमितिवाच्यम्। अनुवन्धानांप्रत्याहारा वोध्यत्वस्यैवतेनज्ञापनीयत्वात् इतिदिक्॥ ७॥

——:÷:——

## आदिरन्त्येनेत्यादि ।

ननुप्रत्याहारेऽनुवन्धानाभिमित्यादिभाष्ये प्रत्याहारशब्दस्य वर्ण समाम्नायेप्रसिद्धया तत्र च तेषांप्रत्यक्षेणोपलम्भात् कोऽसौप्रत्याहारः यत्रइतांन ग्रहणमतआहआदिरन्त्येनेत्यादिमूले । अयम्भावःप्रत्याहार शब्दस्यादिरन्त्येनेतिवोधिते योगरूढिः। वर्णसमाम्नाये तुतादर्थ्या-ल्लक्षणयाप्रयोग इति ॥ ८ ॥

## ऊकालेति ।

ऊकालत्रयोच्चारणाधिकरणी भूतकाल सदृशकालोच्चार्यमाणो ऽच्क्रमेण ह्रस्वदीर्घप्लुतसंज्ञांलभते इत्यर्थः । उकारोच्चारणाधिकरणी-भूतकाल सदृशकालोच्चार्यमाणोऽच्ह्रस्व संज्ञकः । इत्यादि यावत् ॥९॥

## उच्चैरुदात्तइति ।

भागविशिष्टं यत्ताल्वादि स्थानंतदवयवोय ऊर्ध्वदेशस्तद्देशाव-च्छिन्नवायुसंयोगाव्यवहितोत्तरजायमानोऽच् उदात्तसंज्ञां लभते ॥ १०

## नीचैरनुदात्तइति

भागविशिष्टताल्वादिस्थानावयवाधोदेशावच्छिन्नवायुसंयोगा-व्यवहितोत्तरजायमानोऽच् अनुदात्तासंज्ञांलभत इत्यर्थः ॥ ११ ॥

## ह्रस्वग्रहणमतन्त्रमिति

अयम्भावः अर्धह्रस्वशब्दे ह्रस्वस्यार्धमितिसमासे ह्रस्वस्वरिते एव प्रवृतिःस्यात् नतु दीर्घप्लुतयोः। अर्धं च तत् ह्रस्वमितिविशेषण समासे दीर्घ एवप्रवृतिःस्यात् नतुह्रस्वप्लुतयोरिति ह्रस्वग्रहणमविवक्षि-तम् तथाच ह्रस्वदीर्घप्लुतानामर्धमेवोदात्तमविवक्षितत्वेमानन्तु येऽरा तनूनपात् शचीपत्तिम् इत्यादावधोंदात्तत्वं सकलवह्वृच्, प्रसिद्धम शाकल्योऽप्यत्रप्रमाणम् । अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः । उदादायार्धमस्याथ शिष्टंनिघ्नन्ति कम्पितम् ॥ १२ ॥

लृवर्णस्य द्वादश तस्यदीर्घभावादिति । न चेदमयुक्तम् लृति लृवाइति विधेयस्य लृकारस्य दीर्घस्य प्रसिद्धत्वादितिवाच्यम् । तस्येषत् स्पृष्ट प्रयत्नजन्यत्वात् । एवं च लृकारस्य विवृत्त प्रयत्न जन्यस्य द्वादश इत्यर्थः ॥ १३ ॥

## यमङ्णनानांनासिका चेति ।

चशब्देनताल्वाद्यपिबोध्यम् न चैषांनासिकास्थानं शिक्षायां नोक्तम् । नासिकायां भवः इत्यर्थकानुनासिक्य शब्देन व्यवहारदर्शनात् । अनुस्वारयमानां च नासिकास्थानमिष्यते इत्यत्र चशब्देनैषां संग्रहात् ॥ १४ ॥

## अचेति ।

ननु अ अ इति सूत्रेणवृवृताकारस्य संवृताकारविधानात् प्रयत्न भेदेन दीर्घाकारह्रस्वाकारयोः सावर्ण्याप्राप्त्यादण्डाढकमित्यादौ दीर्घो नस्यात् अत आह प्रक्रियादशायामिति अयम्भावः अ अ इत्यस्याष्टाध्यायीअसकलसूत्रदृष्ट्या असिद्धत्वेन सवर्णसंज्ञादृष्ट्या ह्रस्वाकारस्यापि विवृतत्वेन दोषा भाव इति ॥ १५ ॥

## अधिकारोऽयमिति ।

पूर्वत्रेतिअस्याधिकारत्वाभावेगोदुहशब्दात् मतुपि पदसंज्ञायां हस्यघत्वे कृतेजश्त्वानुनासिकभष्भावेषु प्राप्तेषु जश्त्वानुनासिकयोः सतोः झषन्तत्वाभावेन भष्भावानापत्तिः । अधिकारत्वेतु जश्त्वानुनासिकासिद्धत्वात् पूर्वंभष्भावेततः तयोः प्रवृत्तौ गोधुग्मान इत्यस्यसिद्धिः ॥ १६ ॥

## अत्राणपरणकारेण ।

ननुवर्णसमाम्नायेऽनुबन्धणद्वयेनाणप्रत्याहारे संदेहः अत

आह अत्राण्पर णकारेणेत्यादिअयम्भावः संदेहेऽपिव्याख्यानतः निर्णयसंभवेन संदेहानवकाशः। अत्र परणकारेण गृहणे उरऋत् सूत्रेतपरकरणं मानम् तद्धि दीर्घादेशनिवृत्यर्थम् यद्यत्रपूर्वणकारेण प्रत्याहारः स्यात् तर्हिऋकारेणदीर्घगृहणाप्राप्त्यातद्व्यर्थमेवस्यात् अत्रवृद्धिरादैच् सूत्रेतपरत्वमानम् उपसर्गादृति ऋत उत सूत्रयोः तपरकरणंतुनमानम् ऌकार गृहणेन तस्य चारितार्थ्यात् एवञ्चात्रैवाण्प्रत्याहारःपरणकारेणान्यत्र पूर्वणकारेणैवेतिविवेकः। एतेननाज्झलाविति सूत्राभावे ऋकारषकारयोः सावर्ण्येऽपिऋगृहणेनषगृहणंनकर्त्तुम्शक्यम्। अणुदिदितिसूत्रेपूर्व णकारेणाण्गृहणादिति शंकापि अपास्ता॥१७।

## एदैतोरित्यादि।

ननु एदैतोरोदौतोश्चमिथःसर्वणसंज्ञायांएचामपि चतुर्विंशतेः संज्ञास्यात् इति चेदत आह—ऐदैतोरित्यादि ननुशिक्षायामेकारौकारयोः विवृतरत्वप्रतीत्या ऐकारस्यौकारस्य च विवृतमत्वप्रतीत्या तयोसावर्ण्यशंकानयुक्ता प्रयत्नभेदात् इति चेन्न। विवृतत्वव्याप्यधर्माणां सावर्ण्यानुपयुक्तत्वात् अत्रेदंतत्वम् ऐचो नुनासिकस्यक्वाप्यदर्शनेनकथं चतुर्विंशतेः संज्ञेति चिन्त्यनीयम्॥ १८॥

## अनुनासिकानुसिकेति।

ननु अणुदिदितिसूत्रेऽजेवास्तु यण्सवर्णाप्रसिद्धेः अत आह अनुनासिकभेदेनेति। रेफस्तुनानुनासिकःअमोऽनुनासिकनह्रौ इतिशिक्षोक्तेः१९

## विश्वपाभिरिति।

यद्यपीति—अयम्भावः अणुदिदितिसूत्रे परणकारेण प्रत्याहाराश्रयणेदीर्घाकारहकारयोःकण्ठस्थानविवृत प्रयत्न जन्यत्वेनसंवर्ण संज्ञायां होढः घटकहकारेण दीर्घाकारस्यापिगृहणापत्तौ विश्वपाभिरित्यत्र ढत्वापत्तिः। नचेकोयणचि इत्यादाविव अणुदिदित्यस्यप्रवृत्त्या अच्पदे

नदीर्घाणामपिग्रहणेनसवर्णसंज्ञा इति वाच्यम् । वर्णानामुपदेशस्तावत् बदुत्तरकालेत्संज्ञातदुत्तरं प्रत्याहरसिद्धिः तदुत्तरसर्वणसंज्ञा तदुत्तरमणुदिदिति इतिपतेनसमुदितेनान्यत्रसवर्णानांग्रहणम् नापिस्वस्मिन्नापिस्वांगे इतिपञ्चधावाक्यापरिसमाप्तिन्यायेन नाज्झलावित्यत्राणुदिदित्यत्र च सर्वणग्राहकताभावोबोधनात्। न चनाज्झलावित्यस्यनस्वाङ्गत्वमितिवाच्यम् । तुल्यास्यइत्यस्य नाज्झलावित्यनेन सहैकवाक्यतया बोध जनकत्वेन नाज्झलावित्यस्यस्वांगत्वात् इति चेन्न । नाज्झलावित्यत्र दीर्घाकारस्यापि प्रश्लेषात् । न चप्रश्लेषे मानाभाव इति वाच्यम्। कालसमयवेलासु इति निर्देशस्य पञ्चधाप्रयत्नं स्वीकृत्यनाज्झलावितिसूत्रप्रत्याख्यान सूत्रारम्भयोः फलभेदाभावस्य च मानत्वात्। न चैवमपि प्लुताकारहकारयोः सर्वणसंज्ञायां हकारेणाकार ग्रहणापत्तौ हेयियासो इत्यादौगुरोरनृत इति प्लुतेषत्वंदुर्वारमिति वाच्यम्। प्लुताकारस्यापि प्रश्लेषात् । अत्रमानं च आरम्भप्रत्याख्यानयोफलभेदाभावः अतोरोरप्लुतादप्लुते इति सूत्रे सप्तम्यन्ताप्लुते ग्रहणञ्च अन्यथा हसिचेत्यस्य दुर्वारतयातद्वैयर्थ्यम् स्पष्टमेवेतितत्वम् ॥ २० ॥

## तपरस्तत्कालस्येति ।

तपरपदे तात्परः तपरः तः परोयस्मात् इति तपरः इति पञ्चमी तत्पुरुषः बहुव्रीहिश्च पञ्चमीतत्पुरुषेमानंतु सहिवहोरोदवर्णस्येति सूत्रे वर्णग्रहणम्। तद्धि तपरसूत्रेण समकालस्यैवाकारस्य ग्रहणे प्राप्ते दीर्घग्रहणार्थम्। पञ्चमीसमासाभावे समकालग्रहणाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति । बहुव्रीहिसमासेतु अतोभिसऐस इति सूत्रेतपरकरणं बोध्यम्। न चसमासद्वये सकृदुच्चरितन्यायविरोध इति वाच्यम्। अआवृत्याऽर्थद्वयसत्वात् ॥ २१ ॥

इति संज्ञा प्रकरणम्।

## स्थानं च प्रसंग इति ।

ननुषष्ठीस्थानेयोगा इति अनिर्धारितसंबंधार्थकषष्ठीघटिते इकोयणचीत्यादौस्थाने इत्यस्योपस्थितौ इकस्थानेयण इत्यर्थेन इकं निवर्त्य यण्भवनस्यप्रतीतेः शब्दानामनित्यत्वप्रसंगः अतआहस्थानं चात्र प्रसंगः तथाचइकः प्रसंगे एवयण्भवति नतुतन्निवृतिः स्थानस्यप्रसंगार्थत्वंतु दर्भाणांस्थानेशरैः प्रस्तरितव्यम् इत्यादौ स्पष्टम् ॥ २२ ॥

## यत्रानेकविधमित्यादि ।

ननुषष्ठीस्थाने इत्यतः स्थानेपदानुवृत्यासिद्धेस्थानेऽन्तरतम सूत्रे-स्थाने गृहणं व्यर्थमितिआह अनेकविधमान्तर्यमित्यादि—अयम्भावः अत्रएतत्परिभाषा ज्ञापनार्थमेवस्थानेगृहणम्तेनचेत्तास्तोतेत्यादौमात्रिक-त्वरूपप्रमाणकृतान्तर्य्येणनेकारस्याकारोगुणः किन्तु तालुस्थानजन्य-त्वादिनाएकारादिरेवेतिदिक् ॥२३॥

## अष्टाभ्य औशित्यादि ।

ननु अनेकाल् शित् सर्वस्येत्यस्यविषयेऽलोऽन्त्यस्येत्यस्य आदेः परस्येत्येत्यस्य च प्राप्तेः सत्वात् अनेकाल् इत्यस्यनिरवकाशत्वेनाप-वादत्वेवाध्यसामान्यपक्षाश्रयणेवीजाभावात् बाध्य विशेषचिन्तापक्षाश्रयणे येननाप्राप्तिन्यायेनालोऽन्त्यस्येत्यस्यैवापवादत्वेऽष्टौ इत्यादौ आदेःपरस्येति दुर्वारम् इति चेदतआहअष्टाभ्य औश इत्यादि—तथा च अनेकाल इति सूत्रमपवादत्वात् अलोऽन्त्यस्येति सूत्रंबाधतेपरत्वाच्च आदेः परस्येतिसूत्रंम् । ननुतस्मादित्युत्तरस्यादेः इत्येकमेवसूत्रमस्तु तत्र च तस्मादित्युत्तरस्येति एकोयोग आदेरिति अपरः तत्रचोत्तरस्येत्यनुवर्त्तते स्थानषष्ठी चेयं योगविभागाच्च आदेरित्यंशंविनापि क्वचित्पूर्वयोगस्यप्रवृत्तिरिति सूत्रद्वयकरणं व्यर्थमितिवाच्यम् । तस्मादित्यु-त्तरस्येत्यस्यस्थाने एकयोगकरणे अनेकाल इत्यस्य परत्वाभावेन

आदेरित्यस्यबाधानापत्तौ अष्टौइत्यस्यासिद्धेः। आदेःपरस्यइत्यस्यस्था-नेतत्करणेतु तस्मादित्यत्रस्थानेपदानुवृत्तौ आगमादिष्वस्याप्रवृत्या-पत्तिः अननुवृतौ च आदेरित्यस्यापि आगमादिविषयेप्रवृत्तौदेवासः इत्यादेरसिद्धिरितिसंक्षेपः ॥२४॥

इति परिभाषा प्रकरणम्।

## स्थानत इति।

ननूच्चरितः शब्दः प्रत्यायकोभवति नानुच्चरित इति भाष्यात् दीर्घादीनामुपस्थितये इक्पदस्य स्ववाच्यवाच्येलक्षणावाच्या एवञ्च यथासंख्येनान्वयासंभवात् सर्वेषामिकां स्थाने सर्वे यणः प्राप्नुवन्ति अत आह स्थानत इति। तथा च प्रकृते तालुस्थानजन्येकारस्य त- द्दशोयकार इति ॥ २५।

## इति धकारस्यद्वित्वमिति।

नचान्तरङ्गद्वित्वदृष्ट्या पदद्वयसंबन्धिवर्णद्वयापेक्षबहिर- यणोऽसिद्धत्वेन धकारस्यद्वित्वं दुर्लभमिति घाच्यम्। अन्तरङ्गपरि- भाषायाः सर्वथात्रिपाद्यामप्रवृतेरिति तत्वम् ॥ २६॥

## इति पूर्वधकारस्यदकार इति।

न च झलां जशोऽन्ते इत्यस्याग्रे झसि चेति पाठ्यम् सूत्रद्वयक- रणं व्यर्थमत आह पूर्वधस्येति। तथाच तत्र पाठे द्वित्वस्यासिद्धत्वेन जश्त्वानापत्तिरितिदिक्। २७॥

## हर्य्यनुभव इति।

ननु हरि अनुभव इत्यत्रेकारस्ययणि अचोरहाभ्यामिति तस्य द्वित्वे हलोयमां यमीति लोपेनैकयकारं रूपं साध्यम् तच्चद्वित्वस्य वैकल्पिकत्वेन यकारद्वित्वाभावेऽपि सिद्धम् व्यर्थं लोपविधानमितिचे-

आदित्यशब्दात् ण्यप्रत्यये यस्येतिचेत्यकारलोपे तत्र यकार लोपार्थ मस्यसूत्रस्यावश्यकत्वात्। न च यलोपेऽलोपस्य स्थानिवद्भावइति वाच्यम्। यलोपविधौतन्निषेधात। न च माहात्म्यमित्यादावनेनम लोपः स्यादितिवाच्यम्। यमां यमीति सूत्रे यथासंख्यान्वयस्वीकारेण मस्य यकारपरे लोपाप्रसक्तेः। न च हलो योयिलोपइत्येवास्तु। अल लातीत्यत्रलस्य लकारे परे लोपानापत्ते रितिदिक्॥ २८॥

## गव्यूतिरिति।

ननु हलिसर्वेषामित्यत्रवकारानुवृत्त्यभावेनगव्यंनाव्यमित्यत्र भसंज्ञयापिलोपःशाकल्यस्येत्यस्याप्रवर्तनेन तयोर्वलोपाभावेऽपि गव्यूतिरित्यत्राध्वपरिमाणेचेतिवान्तादेशेऽन्तवर्तिविभक्त्यावान्तस्यपदत्वा त्वलोपोदुर्वार इति चेदत आह वान्त इत्यत्र वकारादि। एवञ्च वकार प्रश्लेषसामर्थ्यात् न वलोपः। वस्तुतस्तु लोपोव्योर्वलीति सूत्रेवकारस्य भाष्ये प्रत्याख्यानात् तेन लुप्तवकारस्य प्रश्लेषोऽयुक्तः गव्यंनाव्यमित्यत्र दोषः परि हृतएव। गव्यूतिरित्यत्रापि न दोषस्तथाहि— अध्वपरिमाणे चेति वार्त्तिक निष्पन्ने नवलोपः संज्ञाभङ्गभयात्। नापि गोर्यूताविति वार्तिक निष्पन्ने छान्द सत्वात् तस्मात् प्रश्लेषो न कर्तव्य इति शेखरकारः। अत्रेदं बोध्यम्—अतोल् रान्तस्येति सूत्रे वकार प्रश्लेषपरभाष्यानुरोधात् वकारप्रत्याख्यानमेकदेश्युक्तिः संज्ञाभङ्गभयात् वलोपवारणमप्ययुक्तम् संज्ञापदघटित एवतन्न्यायप्रवृतेः। अत एव मोराजिसमः क्वावितिचरितार्थम्। अन्यथा तत्रापिसंज्ञाभङ्गभया देवानुस्वाराभावे सिद्धे तद्वैयर्थ्यमुस्पष्टमेव छान्दसत्वेनापि वारणम युक्तम् तदर्थमपिबहुशोयत्नदर्शनात्। किञ्च अनतीति अन् गोः अन् गोन् ततः क्यचिवान्तादेशेनः क्य इतिपदत्वेतत्रवलोपवारणार्थ वकार प्रश्लेष आवश्यक इति सुधीभिराकलनीयम्॥ २९॥

## तन्निमित्तस्यैवेतिकिमिति।

अयम्भावः लव्यमित्यादौवान्तोयीतिवान्तादेशसिद्धौधातोस्त-

न्निमितस्यैवेति व्यर्थमितिपृच्छति तन्निमितस्यैवेतिकिम्। अवयवद्वारासमुदाये प्रश्नः। नियमार्थ सूत्रमित्युत्तराशयः। ऊयत औयत इति नियमाभावेऽत्रवान्तादेशापत्तिः सूत्रएवग्रहणम् विपरीत नियमवारणार्थ मतएवबाभ्रव्य इत्यत्रबान्ता देशसिद्धिरितिदिक्। ३०॥

## उपेन्द्र इति।

उप इन्द्र इत्यत्र स्थानेऽन्तरतम आद्गुण इत्यनयोरेकवाक्यतया कण्ठोष्ठस्थानजन्ययोरकारोकारयोः स्थाने तादृशस्थानजन्यौकारे तत्सिद्धिः। न चात्र एकदेशबिकृतन्यायेनउप इत्यस्यपदत्वाज्जश्त्व दुर्वारम् नच स्थानिवद्भाव इति बाच्यम जश्त्वबिधौतन्निषेधादितिबाच्यम्। जश् पदेन चरसन्निहित झलां जशझसीति जशोग्रहणेन तत्रेवस्थानिवद्भावनिषेधात्। एकदेशबिकृतमित्यस्यानित्यत्वाच्च अतएव गणेश इत्यादौ नङ्मुट् इति॥ ३१॥

## कानिसन्तीत्यादि।

ननु कानिसन्तिकौस्त इत्यत्राल्लोपस्यस्थानिवत्वात्यणावादेशौ दुर्वारौ। नचेकारौकारयोः स्थानिभूतादचः पूर्वत्वेन दृष्टत्वाभावान्नस्थानिवद्भाव इति वाच्यम्। पदसंस्कारपक्षे पूर्वत्वेन दृष्टत्वाभावेऽपिवाक्यसंस्कारपक्षे पूर्वत्वेनदृष्टत्वात् एतत्पक्षेहिवाक्यसाधकसामग्रीः संपाद्ययेन क्रमेण संपादनं तेनैवक्रमेण साधनमितिविवेकः॥३२॥

## प्रवैहीति।

ननुएत्येधत्यूत्यद्विस्वस्य ऊडंशे गुणवाधेनिश्चितेऽपि एत्येधत्यंशेऽपिपररूपबाधोनिश्चितस्तत्र पररूपमात्रस्य वाधोऽथवायत्किंचिच्छास्त्रविहितस्येति संदेहे आह पुरस्तादपवादेति अयम्भवः शास्त्रेबाधसामान्यचिन्तापक्षवाध्यविशेषचिन्तापक्षावाश्रितौ प्रकृतेप्रमाणाभावेन बाध्यसामान्यचिन्तापक्षानाश्रयणात् विशेषचिन्ताश्रयणेकिं शास्त्रवि-

हितस्य बाधः इति जिज्ञासायां पुरस्तादपवादन्न्यायेनस्वानन्तरस्यै-ङ्परूप मित्यस्यैव बाधः अवेहीत्यत्रपरत्वादोमाङोश्चेत्यस्यै बध्याय्यतया वृद्धिरसाधुरेवेतिदिक् ॥ ३३

प्रोढवानिति।

ननूढत्वरूपानुपूर्वीमच्छब्देप्रादूहोढोढ्येषैष्येष्विति वार्त्तिकेन वृद्धिविधानात् तादृशानुपूर्व्या ऊढवच्छब्दघटकोढशब्देऽपि सत्वात् प्रोढवानित्यत्र वृद्धि र्दुवारा इत्याशंक्याह-अर्थवद्ग्रहण इत्यादि। अयम्भावः स्वंरूपमिति सूत्रेस्वशब्देनार्थोगृह्यते रूपशब्देन स्वरूपमेवञ्चानुपूर्वीमत्पदोपादानेऽर्थः शब्दश्चेत्युभयं शब्दस्य संज्ञीतिस्वंरूपमित्यस्यार्थस्तथाच शब्दार्थयोरुपस्थितावर्थे कार्यबाधेनार्थस्य विशेष्यतया भानासंभवेऽपि प्रकारतयाभानन्नर्थविशिष्टःशब्दःसंज्ञीतिफलितम् तेनेयं परिभाषासिद्धेति।

यत्तुव्रश्चादि सूत्रेराजेः पृथक् भ्राजग्रहणमत्रप्रमाणमितितन्न। व्रश्चादिसूत्रेधातोरित्यनुवृतेः साहचर्येणवाधातोरेवग्रहात्। भ्राजघटके राजशब्देधातुत्वाभावादिति। अत्रव्रश्चादिसूत्रे भ्राजग्रहणस्य ज्ञापकत्वप्रदर्शनं क्वचिन्मूलपुस्तके दृश्यते स अपपाठ इतिदिक् ॥ ३४ ॥

प्रार्च्छतीति।

ननु प्रार्च्छतीत्रोपसर्गादृतीतिवृद्धौस्वरेऽन्तादिवर्णसत्वे पूर्वपर घटितसमुदायेव्यवहाराः प्रातिपदिकत्वादयस्त एकादेशविशिष्ट आयान्त्वित्यर्थकेनान्तादिवच्चेति सूत्रेण रेफान्ते पदत्वातिदेशा खरवसानयोरितिविसर्गः कुतोनेत्याह—अन्तवद्भावेनेत्यादिमूले। सोभयथर्क्षु कर्त्तरिचर्षि देवतयोरित्यत्र छान्दसत्वान्निर्वाहःस्यादि वाच्यम्। विसर्जनीयोऽनुत्तरपद इत्यस्य खरनिमित्तीकृत्यतदव्यवहि पूर्वस्थानिकस्य रेफस्य न विसर्गः इत्यर्थेन दोषादिति तत्वम् ॥ ३५

उपसर्गेणाधातोरित्यादि।

नन्वत्रोपसर्गेणैवधातोराक्षेपे सिद्धे सूत्रेधातुपदंव्यर्थमितिचेत्

तत्सामर्थ्याद्योगविभागेन पुनर्वृद्धिविधानार्थं तस्यावश्यकत्वात्। तेन प्रऋच्छतीतिस्थिते ऋत्यक इतिपाक्षिकोऽपिप्रकृतिभावोनेत्याह—उपसर्गेण धातोराक्षेपइत्यादि मूलमिति॥ ३६॥

## अचिकिंकुमारीशेत इति।

नन्वकः सवर्ण इत्यत्राचिपदानुवृत्तिर्व्यर्थाइति चेन्न। कुमारीशेत-इत्यत्रेकारशकारयोः सर्वणसंज्ञायां कुमारीशेत इत्यत्र दीर्घापत्तेः। न चनाज्झलाविति सर्वणसंज्ञानिषेध इति वाच्यम्॥ आक्षरसमाम्नायिकेएव सवर्णसंज्ञानिषेधात्। नचाणुदिदित्सूत्रेण नाज्झलावितिघटकाच्पदेनदीर्घादीनामपिग्रहणात् सवर्णनिषेध इति वाच्यम्। स्वस्मिन्स्वांगेवाऽणुदिदित्यस्याप्रवृतेः। कृतेऽचिग्रहणेतु न दोषः शकारस्य दीर्घकारसर्वणत्वेऽप्यच्पदबोध्यत्वाभावादितिदिक्॥ ३७॥

## अकः किमिति।

नन्वेचोऽयवायाव इत्येक्षु-अयादिविधानेनपरिशेषादक एवदीर्घःसूत्रेऽकःकिमिति प्रश्नः। असवर्णेऽचि अयादिविधानेऽपि सवर्णेऽचि परत्वाद्धरय इत्यादौदीर्घापत्तिरित्युत्तराशय इति दिक्॥ ३८॥

## अतीतिनिवृत्तमिति।

अयम्भावःअवङ्विधावतीत्यस्य संवन्धेगवेशः गवोद्ध इत्यादि भाष्यासंगतिरतस्तन्निवृतिः। अतएवेन्द्रेचेत्यारम्भसामर्थ्यान्नियमित्यकरादिष्वुक्तमितिदिक्॥ ३९॥

## एङन्तस्यकिमिति।

ननुगोशव्दस्यैङन्तत्वाव्यभिचारात् सर्वत्रविभाषागोरित्यत्रैङनुवृति र्व्यर्था इत्याशयेन प्रश्न एङन्तस्यकिमिति चित्रगोऽग्रमित्यत्रापि गुशब्दे एकदेशविकृतन्यायेनगोशव्दत्वातिदेशोऽवङ्दुर्वार इतिदिक्॥४०

## पदान्तेकिमिति ।

नन्वेङः पदान्तादित्यस्यापवादभूतस्य सर्वत्र विभाषेत्यस्याप्युत्सर्गसमानादेशा इति न्यायेनपदान्तविषयत्वेलब्धे पदान्ते किमिति प्रश्नः । तदभावेऽस्यापवादत्वं दुर्लभमित्यपदान्तेऽपिप्रकृतिभावः स्यांदित्याशयेनोत्तरङ्गोरिति दिक् ॥४१ ॥

## पदान्तेकिंगवीति ।

नच शंकासमाधानेऽसंगतेस्तयोर्वालैरपिसुज्ञेयत्वादिति वाच्यम् । पदान्त इत्यस्यप्राचीनदत्तगवे इत्युदारहणस्यायुक्तत्वध्वननाय तयोःसत्वात् । न च कथंप्राचीनप्रत्युदाहरणमयुक्तमितिवाच्यम् । तत्रावङ्ण्यतोगुण इतिपररूपेऽपितत्सिद्धेरितिदिक् ॥ ४२ ॥

इत्यच्संधिप्रकरणम् ।

---

## अथ प्रकृतिभाव इति ।

नन्वस्यलेखः सर्वत्रविभाषागोरित्यतः पूर्वमेवोचितस्तत्रापि प्रकृतिभावानुवृत्तेरिचेन्न । प्रकृत्यान्तःपादमव्यपर इत्यत्रनान्तःपादमव्यपर इति प्रचुरपाठस्यायुक्तत्वध्वननायप्लुतप्रगृह्येत्यतःपूर्वंतल्लेखात् । अत्र नपदानुवृत्तौतुअचिप्लुतप्रगृह्ययोरेवनिषेधःस्यादिति ॥ ४३ ॥

## नित्यंकिमिति ।

ननुविभाषापदस्येन्द्रेचेत्यारंभान्निवृत्तिसिद्धावत्रनित्यग्रहणं व्यर्थमितिप्रश्नाशयः । नित्यग्रहणंसामर्थ्याद्योगविभागेन वाधकवाधनार्थमित्युत्तराशयः । तेन हरीईशावित्यत्र चरितार्थं प्रकृतिभावंप्रवाध्य चक्रि अत्रेत्यत्र चरितार्थेनेकोऽसवर्णइत्यनेनहरीएतावित्यपाक्षिकह्रस्वसमुच्चितप्रकृतिभावोनेतिदिक ॥ ४४ ॥

## ह्रस्वविधिसामर्थ्यादिति।

अयम्भावः अत्र चेन प्रकृत्यापदस्यानुकर्षेऽपि तस्य चानुकृष्टत्वाद् चानुकृष्टंनोत्तरत्रेतिउत्तरत्रसम्बन्धाभावेन ऋत्यकइत्यत्र ह्रस्वविधिसामर्थ्यादेवप्रकृतिभावो वाच्य इति इहापिह्रस्वविधिसामर्थ्यादेवप्रकृतिभावः सिद्धः तदनुकर्षणार्थश्चकारो न कर्तव्यइति न च प्रकृत्यापदस्यानुवृत्तौ ह्रस्वप्रकृतिभावयोर्विधानेन पक्षेचक्रीअत्रेत्यस्य सिद्धिः तत्फलमितिवाच्यम् संहिताया अविवक्षयापि तत्सिद्धेः विधेयभेदे वाक्यभेदेन विशिष्टविधानस्यैवोचितत्वाच्च अतएवभाष्येअन्यतरच्छक्यमकर्तुमिति,ग्रन्थेनकण्ठतः तस्य खण्डनं कृतमितिदिक्। एतेन कुत्रचिन्मूलग्रन्थेचक्रीअत्र इति दृश्यमानः पाठोऽपपाठ एवेति बोध्यम् ॥ ४५ ॥

असवर्णे इति पर्युदासप्रवृत्तिः पदान्ते इकि एव सम्भवतीति साहचर्य्यात् पर्युदस्यमानस्यापिप्रवृत्तिः पदान्ते एवेतिपदान्तानुवृत्तिर्व्यर्थतशंकते पदान्तात्किमिति। यर्यीपपीत्यादिषु अपदान्तेऽपिसंप्रति पर्युदासप्रवृतेः सत्वेन साहचर्य्यमयुक्तमित्यपदान्तेऽप्रवृत्यर्थमनुवृत्तिश्चरितार्थेत्याशयेनोत्तरंगौर्यौ इति ॥ ४६ ॥

## वत् किमिति।

ननु अप्लुतवदुपस्थित इत्यत्र वद्ग्रहणे प्राधान्यादस्यकार्य्यातिदेशस्यैव स्वीकारेण प्लुतस्य यणादिकार्य्ये जाते तस्य श्रवणाभावस्यैवेष्टत्वे नोपस्थिते इति पठित्वा प्लुतनिकरणे तन्निषेध एवोचितइतिवत्करणंव्यर्थमिति प्रश्नः वत्किमिति। अग्नीइतीत्यत्रप्लुतस्यासिद्धत्वात् प्रगृह्यसंज्ञायां गुरोरनृतइति प्लुते पुनः प्रगृह्यसंज्ञायांतदाश्रयप्रकृतिभावेन यणादिकार्यप्रतिषेधे इष्टप्लुतश्रवणानापत्तिरियुत्तराशयः ॥४७॥

उभयत्रविभाषेयमिति। प्राप्ताप्राप्तविभाषेत्यर्थः इतिशब्देप्राप्तिरन्यत्राप्राप्तिरितिस्थितेऽस्यारम्भ इति मूलाशयः ॥ ४८ ॥

हरी एतौ। ईकारेपरादिवद्भावेन द्विवचनत्वंव्यपदेशिवद्भावेने-दन्तत्वमिति तस्यप्रगृह्यसंज्ञा नचेदन्तत्वरूपमुख्यधर्मवद् घटकत्वेने-कारस्यासहायत्वाभावादीकारे ईदन्तत्वंदुर्लभमितिवाच्यम् निजौच-त्वार एकाच इति भाष्येण क्वचिद् ससहायेऽपितत्प्रवृत्तेःघटकत्वघटि-तत्वयोरेव तेनातिदेशाच्चेतिदिक् ॥ ४६ ॥

## अमूआसाते।

स्त्रीक्लीवलिङ्गयोर्मूत्वस्यासिद्धत्वेऽपि एदन्तद्विवचनत्वेन पूर्वे-णैवसिद्धमिति पुलिङ्गेफलसत्वात्तदभिव्यञ्जयन्नाह रामकृष्णावि-त्यादि नचैतद्दृष्ट्याऽपिमूत्वस्यासिद्धत्वात् कथं प्रगृह्यत्वमिति वाच्यम् आरम्भसामर्थ्येनास्यसिद्धत्वबोधनात् ॥ ५० ॥

अदः शब्दसम्बन्धिनोरीदूतोर्मात् परत्वाव्यभिचारात्मात्ग्रहणं किमितिप्रश्नः असति तद्ग्रहणे संनियोगशिष्टन्यायेनैकारस्याप्यनुवृत्तौ अमुके अत्रेत्यत्रैकारस्य प्रगृह्यत्वं दुर्वारमित्युत्तराशयः अकज्विशिष्ट-स्यादःशब्दत्वं तन्मध्यपतितन्यायेन बोध्यमिति ॥ ५१ ॥

## वत्वस्यासिद्धत्वादिति।

अयम्भावः किम्वुक्तमित्यत्र किमुउक्तमित्यत्रमयउञोवो वेतिवत्वेमोनुस्वारः इति अनुस्वारो न शंक्यःअनुस्वारं प्रतिवत्वस्या-सिद्धत्वादिति असिद्धत्वं पूर्वत्रासिद्धमितिबोध्यम् नतु अन्तरङ्गपरि-भाषयेति त्रिपाद्यांसर्वथातदप्राप्तेरितिदिक् ॥ ५२ ॥

## ब्रह्मबन्धविति।

ननु अनार्षे इति शब्दस्येदं फलमयुक्तमार्षत्वादस्य तत्रच दृष्टानुबन्धित्वात्कार्यस्येतिचेन्नवैदिकेतिशब्दानुकरणस्यलोकेऽपिसत्व-मभ्यपेत्य फलदानेतात्पर्य्यादिति तत्वम्। ५३॥

## विष्णइति।

अत्र वहुषुमूलपुस्तकेषु विषण इति इतिपाठोदृश्यते स च अपपाठः प्रगृह्यसंज्ञामभ्युपगच्छता शाकल्येन तदितरस्यासाधुत्ववोधनेनतत्रैववलोपस्य कर्तुमशक्यत्वादिति अत्र सामान्याचार्य्ये विशेषाचार्य्यविषयिणी चर्चातुगगनकुशमायमानेतितत्त्वम् । प्रकृतिभावस्यप्रायिकत्ववरणनेन समर्थनन्तु साहसमात्रमिति सम्प्रदायः ॥ ५४॥

## अर्थग्रहणंकिमिति।

ननु ईदूतौ च सप्तम्यर्थे इति सूत्रेऽर्थग्रहणाभावेऽपिप्रत्ययग्रहणपरिभाषया तदादेरुपस्थितौ तद्विशेष्यकसप्तमीविशेषणकतदन्तविधौ सप्तम्यन्तंविशेष्यमीदूतौ च विशेषणे कृत्वा येनविधिरिति पुनस्तदन्तविधौ ईदूदन्तं सप्तम्यन्तं प्रगृह्यमित्यर्थे जातेगौरीइत्यादेः प्रत्ययलक्षणेन सप्तम्यन्ततयाप्रगृह्य संज्ञासिध्यतिअर्थग्रहणंव्यर्थम् ॥ नचसंज्ञाविधाविति परिभाषयासप्तम्यन्तमित्यर्थालभेईदूदन्तासप्तमीत्यर्थेउदाहरणेङेर्लुप्त वात तदसिद्धिरितिवाच्यम् ॥ सूत्रारम्भसामर्थ्येनसंज्ञाविधावित्यस्येहाप्रवृतेः । नच सूत्रंसप्तम्यन्तयप्यादिशब्देचरितार्थमितिवाच्यम्॥ तत्रापिसरसीयदि । इति भाष्येणसरसीशब्दे सूत्र चारितार्थ्यप्रदर्शनपरेणतेषामनभिधानेनऊकारांशेवै यर्थ्येन । ईदतौसप्तमीप्रगृह्यम् अदसः एद्वद्विवचनम् इतिन्यासे लाघवसत्वेऽपिगुरुभूतयथाश्रुतन्यासेन पूर्वप्रकरणापेक्षयाएतत्प्रकरणस्यवैजात्यवोधनेन चसंज्ञाविधावित्यस्या प्रवृत्यासप्तम्यन्तमित्यर्थेविवादाभावात्इष्टसिद्धौअर्थग्रहणवैयर्थ्यतादवस्थ्यादिति चेन्न अर्थग्रहणस्य मात्रनिवेशेतात्पर्य्य ग्राहकत्वात्तथाचसप्तम्यर्थमात्रबोधकमीदूदन्तंप्रगृह्यमित्यर्थजायते सप्तम्यर्थमात्रबोधकत्वं च सप्तम्यर्थमात्रान्वितप्रकृत्यवोधकत्वम्गौरीत्यादेः यःशिष्यतेसलुप्यमानार्थाभिधायीतिन्यायेन सप्तम्यार्थाधिकरणमात्रान्वितस्वार्थबोधकत्वे न तत्रप्रगृह्यसंज्ञा

वापीपदस्यतु आधेयार्थसम्बद्धसप्तम्यर्थो धकारगस्य यः शिष्यतेइति न्यायेनबोधकत्वान्न प्रगृह्य संज्ञेतिदिक्॥ ५५॥

## अप्रगृह्यस्येतिकिम्।

ननुअणोऽप्रगृह्यस्येत्यस्यत्रिपादीस्थत्वेन अणुदित्सूत्रदृष्ट्या असिद्धत्वेन एतद्घटकाणपदस्य सवर्णाग्राहकत्वात् मनदोषः अग्नीत्या दौइत्याशयेनशंकते अप्रगृह्यस्येतिकिम् अणुदिदित्यस्य संज्ञासूत्रत्वेन कार्य्यकालपक्षे तेदकवाक्यतापन्नत्वेनासिद्धत्वाभावात् जातिपक्षेदोषभावाच्चेति उत्तराशयः इतिदिक्॥ ५६।

## पदान्तादिकिमिति।

ननु नामघटकतवर्गस्य पदान्तटवर्गात् परस्यैव सम्भवेन तद्भिन्नतवर्गस्यापि पर्युदासन्यायेन पदान्तटवर्गात् परस्यैवनिषेधेसिद्धेन पदान्तादित्यत्र पदान्तादितिव्यर्थमिति पृच्छति पदान्तादितिकिम् पर्युदासन्यायस्यानित्यत्ववोधनेन प्रकृतसूत्रेऽप्रवृत्तिसम्पादनद्वाराईट्टे इत्यत्रष्टुत्वनिषेधार्थंचरितार्थमित्युत्तराशयः॥ ५७॥

ननु न पदान्तादितिसूत्रे टोः ग्रहणभावेऽपिनदोषः न च परान् अस्यतीतिपरास् टीकते इत्यत्र पूर्वान्तवद्भावेनपरशब्दवृत्तिपदत्वस्याऽकारेतिदेशेनाकारात्परस्य सस्यष्टुत्वनिषेधः स्यादितिवाच्यं ष्टुनाष्टुरित्यतः टुपदमनुवर्त्य पञ्चम्यन्तत्वेन विपरिणमय्य पदान्तात् टवर्गात्परस्य ष्टुत्वनिषेध इत्यर्थेनादोषादितिचेन्न टुपदानुवृत्तौ सन्नियोगशिष्टन्यायेन पकारस्यापि अनुवृत्त्यापत्तौ ततःपरस्यष्टुत्व निषेधे सर्पिष्टममित्यत्र सर्पिसतमितिस्थिते ह्रस्वात्तादौतद्धिते इत्यस्यासिद्धत्वेनफलां-

जशोऽन्ते इति प्राप्तजश्त्वंवाधित्वाऽपवादत्वात्ससजुषोरुरितिरुत्वे-खरवसानयोरिति विसर्गेतस्यसकारे तस्य ह्रस्वात्तादौ तद्धिते इति षत्वे ततः परस्य तमब्घटकतकारस्य ष्टुत्वनिषेधापत्तेः। न च षत्वेऽपिजश्त्वंदुर्वारमितिवाच्यम् जश्त्वद्दृष्ट्यासकारस्यैवासिद्धत्वात् न चात्रषत्वस्यासिद्धत्वाज्जश्त्वं तद्बाधित्वारुत्वंतदपि वाधित्वानिरव-काशत्वात्षत्वमिति पुनः जश्त्वं पुनः रुत्वमित्यादिनाचक्रकापत्ति-रितिवाच्यं चतुष्टयमित्यत्र रेफस्यविसर्गे तस्य सकारे तत्र षत्वसंपा-दनेन ह्रस्वात्तादावित्यस्यचारितार्थ्याच्चक्रकस्योत्थानासंभवादिति-दिक॥ ५८॥

## चतुर्मुखः।

ननु यरोऽनुनासिकोऽननासिकेवेति अनुनासिकोदुर्वारइतिचेद-तआहस्थानप्रयत्नाभ्यामित्यादि। अयम्भावःस्थानेऽन्तरतम उरणरपर इतिसंहिता पाठेऽन्तरतमइत्यस्य सप्तम्यन्तस्य प्रथमान्तस्य वा निर्देश इति निर्णयाभावेन सप्तम्यन्तपाठेऽन्तरतमेस्थानिनि आदेश इत्यर्थः— एवञ्चानुनासिकस्य स्थानमात्रेणान्तरतमे रेफे न प्रवृत्तिरिति।

यदितु इकोयणचीत्यस्य मात्राद्वयन्यूनकात्वविशिष्टतालुस्थान-जन्य ह्रस्वेकारस्ययण् विधानेन चरितार्थस्य सुद्ध्युपास्य इत्यादौअप्र-वृत्तिः स्यादिति सप्तम्यन्तपाठः भाष्ये दृष्यत इत्युच्यते तर्हिअनुस्वा-रस्य ययीत्यसमस्तमपि सवर्णपदं स्वरितत्ववलेनापकृष्य पदान्तस्य परः अनुनासिकेपरे सवर्णः अनुनासिकोभवतीत्यर्थेकस्य यरोऽनुनासि-कइत्यस्यरेफेऽप्रवृत्तिः रेफसवर्णानुनासिक्याभावात् न च रेफसवर्णः अनुनासिकोरेफ एवेति वाच्यं रेफस्यानुनासिकत्वेमानाभावात्-उक्तंच भाष्ये रेफोष्माणां सवर्णाः न सन्ति इति॥ ५६॥

ननु ककुद्मन्तः इत्यत्र प्रत्ययेभाषायाम् इति अनुनासिकः स्यादत आह यवादिगणेदकार निपातनादिति नचयवादिगणे ककुद् इति प्रकृतिमात्रस्यपाठेन तत्रानुनासिकाऽप्राप्तेर्निपातनंकथमितिवाच्यम् तसौ मत्वर्थे इत्यत्रतकारात् पूर्वंदकारस्यप्रश्लेषेण भसंज्ञयैवदोषविरहात् नच दकारप्रश्लेषेमृन्मानित्यत्रानुनासिको नस्यादितिवाच्यम् तत्र झय इति मस्यवत्वेमृद्वानित्यस्यैवसाधुत्वात् न चैवमपिमकारस्य सानुनासिके ककारेऽनुनासिकः प्राप्तः सनस्यादितिवाच्यम् वकारस्यविधेयत्वेन सवर्णाग्राहकत्वेनानुनासिकोऽप्राप्तअतएवासुववतः इतिभाष्योदाहरणेनानुनासिकउतवणमितिदिक् ॥ ६० ॥

ककुद्मन्तः इति ।

प्राचीनाभिमतं मयटिनित्यमिति वार्त्तिकमपहाय भाष्याभिमते प्रत्ययेभाषायामित्यत्रातिव्याप्तिमाशङ्क्याह कथंककुद्मन्त इतिप्रश्नाशयः यवादिगणे ककुन्मह इति पठनीये दकारपाठेनानुनासिको नभवतीत्युक्तराशयः यदित्तुगणे ककुद् इति प्रकृतिमात्रं पठितस्तत्रानुनासिकाप्राप्तेर्निपातनं नयुक्तमित्युच्यते तर्हि तसौमत्वर्थेइत्यत्रतात् पूर्वंचत्वेन दकारं प्रश्लिष्यभसंज्ञयैवतदभावोवोधनंच दकारप्रश्लेषे मृद्शब्दात् मतुपियवादिगणे तस्यपाठेन वत्वाभावेऽनुनासिके कृतेमृन्मानितिभवति तन्नस्यादिति वाच्यम् तस्यगणे पाठेमानाभावेनझय इति वत्वेमृद्वानित्यस्यैवेष्टत्वात् अनैमस्यानुनासिकवकारे कृतेपुनःशङ्का न कर्य्यावकारस्यविधेयत्वेन सवर्णाग्राहकत्वात् अतएव असुव्वतः इति भाष्योदाहृत्ते नानुनासिकश्रुतिरितित्तत्त्वम् ॥ ६१ ॥

उत्थानमिति ।

ननु उद् स्थानमितिस्थिते तस्मादित्युत्तरस्य आदेः परस्य

स्थानेऽन्तरतमइत्येतेषामेकवाक्यतापन्नेनउदःस्थास्तम्भोरिति उदन्य वहितोत्तरस्थाघटकस्यअघोषमहाप्राणप्रयत्नजन्यत्वविसिष्टदन्तस्थान जन्यसकारस्य स्थाने तादृशे थकारे झरो झरीति लोपेखरिचेति च र्त्वेउत्थानम् लोपाभावेथकारस्यैवश्रवणं नतु चर्त्वं तत्प्रतिथकारस्या सिद्धत्वात् अत्रभाष्यसम्मतसूत्रपाठेतु न थकारस्यासिद्धत्वमिति च र्त्वंभवत्येवेति नव्याः तन्न तक्रन्यायेन चर्त्वं वाधित्वा थकारे कृते न चर्त्वमित्याशयात् इति तत्वम् ॥ ६२ ॥

## पदस्येतिकिम् गम्यते ।

ननु मोऽनुस्वारइति सूत्रेपदस्ये त्यनुवृत्तिर्वृथेति शङ्कत्तेपदस्ये ति गम्यते इत्यत्रापदान्तस्यापिमस्यानुस्वार स्यादितितदनुवृत्तिरित्युत्तरा शयः नच उञिचपदेइत्यतःपदे इत्यनुवर्ततेतथा च हलादौ पदेइत्यर्थे न दोषः इति वाच्यम् पुम्भ्याम् पुंसु इत्यादौ अनुस्वारानापत्तेः न चैवं नश्चापदान्तस्य इत्यत्र मकारानुकर्षकचग्रहणं व्यर्थं सत्नियमार्थं तदाकारश्च अपदान्तस्यमस्य अनुस्वारश्चेतर्हि झल्येवीत नदोषः गम्य तेइत्यत्रेति वाच्यम् झल्यनुस्वारश्चेत्तर्हि अपदान्तस्यै वमस्येति विप रीतनियमापत्तौ गम्यते इत्यत्रानुस्वारापतेरित्याशयात् ॥

## झलिकिं मन्यते ।

नश्चापदान्तस्येति सूत्रे झल्पदाभावे अचि अनुस्वाराभावा यहल्पदस्यानुवृत्तिरवश्यंवाच्या तथाच अपदान्तमस्यानेन पदान्तम- स्यपूर्वेणानुस्वारप्रवृत्तौ पूर्वत्रैवपदस्येति निवर्त्यपदान्तापदान्तयो स्तेनै सिद्धेऽत्रमानुवृत्ति वृथेतितत्सामर्थ्यात् मन्यकर्मणीतिनिर्देशाच्चाझलि नास्यप्रवृत्तिरिरिति शंकतेझलिकिमिति उत्तराशयस्तु अत्रमानुवृत्त्यभावे उतरत्रपदाधिकारस्य क्लृप्ततयामोऽनुस्वरःइत्यत्रापिसम्बन्धे अपदान्त मस्यानुस्वारार्थमनुवृत्तिश्चरितार्थेति तथाकल्पनायाः कर्तुमशक्यत्वत् मन्यनिर्देशेन खण्डनस्यायुक्तत्वात् दोषः नच मन्यतेपर्य्यन्तानुधावनं

व्यर्थंगम्यतेऽत्रेत्रदोषसत्वादितिवाच्यम् सूत्रेनकारश्रवणात् इतितत्वम्

## कुर्वन्तीति ।

ननु कुर्वन्तीत्यत्र शंकासमाधानेऽप्राकरणिकेइतिचेन्न झोऽन्तइत्यत्र अनुस्वारे पठितव्ये नकारपठनमनुस्वारवाधनार्थं तेनकुर्वन्तीत्यत्र णत्वंभवत्यवेतितन्न तत्र नकारस्य परसवर्ण निष्पन्नत्वेन अनुस्वारवाधनमशक्यमितिणत्वस्यासिद्धत्वादनुस्वारे परसवर्णे तस्यासिद्धत्वान्न णत्वमित्याशयेन तयोः सत्वात् ॥

## कुक्टुकोरसिद्धत्वादिति ।

नुनु झलांजशझशीतित्यस्याग्रे अन्तेचेति पाठ्यम् झलां जशोऽन्ते इतिनकार्य्यं कुक्टुकौचटितौ कृत्वापरस्य शरोविधेयौ इति न जश्त्वप्रवृतिरिति चेन्न सुगणट्सायः इत्यादौष्णुत्वनिषेधानपत्तेरेवंच यथा श्रुताएवविधेयौ तथाच जश्त्वं दुर्वारमितिझलां जशोऽन्ते इति कार्य्यमित्यभिप्रायेणाह कुकट्टुकोरित्यादीतितत्वम् ॥

## शश्छोटीतिछत्वविकल्पः ।

ननु शितुक् इति शस्यधुटएवविधेयः तस्य चर्त्वेनतकार एवस्यादिति आह शश्छोटोति अयम्भावः शस्य धुटितस्य अपदान्तत्वात्छत्वं नस्यादिति शश्छोटीत्यत्रचापदान्तानुवृतिरा वश्यको चकुशौ विश्पृशमित्यादौ छत्वाभावायेतिदिक ॥

## पुँस्कोकिल इति ।

पुम् कोकिलइत्यत्र पुमःखय्यीतिमस्यरुत्वे अनुनासिके रेफस्यविसर्गे व्युत्पति पक्षेअप्रत्ययस्येतिप्रर्युदासात् इदुदुपधस्येत्यप्राप्तौ ≍क≍पयोः प्राप्तौ अव्युत्पतिपक्षेपत्वप्राप्तौ संपुंकानामितिसकारे तत्सिद्धम् अनुनासिकाभावे अनस्वारागामेतु पक्षद्वयेऽपिकुप्वोरित्यस्यप्राप्तिरिति नचाद्यपक्षेऽपि प्रत्ययभिन्नस्येतिसामनाधिकरण्येनान्वयस्य

वक्ष्यमाणत्वात् तत्पक्षे षत्वमेवप्राप्तमिति वाच्यम् प्रत्ययावयवभिन्न स्येत्यर्थे एतद्ग्रन्थसत्वादितिदिक् ॥

## ख्याञादेशेनेति।

ननु पुमुख्यानमितिस्थिते पुमःखयीतिरुत्वं कथंनेतिआहख्याञादेशइति अयम्भावः चक्षि ङ-स्थाने ख्शादि ख्यमादेश अशिद्धकाण्डे शस्ययत्वविधानमिति तस्यासिद्धत्वात् अम्परत्वाभावेन नरुत्वप्राप्तिरिति नचख्याधातोः ल्युटि तत्रनिषेधार्थं वार्तिकमिदमपूर्वमिति वाच्यम् तस्यसार्वधातुकमात्रविषयत्वात् नच अस्लनयोश्चेति अनप्रत्यये आदेशनिषेध इति वाच्यम् वाहुलकात् अत्रादेशसत्वात् इत्यलम् ॥

## समः सुटीति।

ननु निर्दिश्यमानपरिभाषयासमइत्यस्य स्थाने रुःस्यादत आह अलोऽन्त्यस्येति। नचमिर्दिश्यमानपरिभाषा अलोऽन्त्यस्येत्यस्यवाधिका इति वाच्यम्। विरोधवीजाभावेन तयोः समावेशेनिर्दिश्यमानस्येति लब्धस्यान्त्यस्यस्थानेऽलोऽन्त्यस्येत्यस्य प्रवृत्तेर्वक्तुमशक्यत्वात्।

## पदस्येतिकिं हन्ति।

अप्रशानितिपर्युदासेमपदान्तनकारे एवप्रवृत्तिः स्यादितिशंक्यतेपदस्येतिकिम्। पर्युदासेनमकारस्थानिक नस्यैव वक्तुंशक्यत्वेनमूलोक्तोदाहरणस्यासंगतो इहपर्युदसन्यायाप्रवृतिरित्याशयेनोत्तरयतिहन्तीति ॥

## अप्रसान् किमिति।

ननु मोनोधातोरित्यस्यधातोः स्वरूप ग्रहणे तत्प्रत्यय इतिपरिभाषया धातुविहितप्रत्यये एवप्रवृत्याप्रशान् शब्देमस्य नकाराप्राप्तेः सूत्रे प्रशान् ग्रहणंव्यर्थमिति पृच्छति अप्रशान्किमिति तद्ग्रहणेनसाप

रिभाषाऽनित्या इति मकारस्य नकारसम्भवेनात्र रुत्वच्य।वृत्यर्थ तद्ग्रहणमित्युत्तराशयेनाहप्रशान् तनोतीति ॥

## वासःक्षौमम ।

ननु वाधसामान्यचिन्ता।पक्षाश्रयणे वीजाभावेनवाधविशेष चिन्ता पक्षस्याश्रयणेऽशर परेविसर्जनीय, इत्यस्य 'विसर्जनीयस्यस' इत्यस्य वा कुप्वो रित्यनेन वाधइत्याह येननाप्राप्तिन्यायेनेत्यादि। अयम्भावः कुप्वोरित्यस्य विषयेतयोः प्राप्तावस्यनिरवकाशत्वेनापवाद त्वेऽप्यैतद्विषयेऽवश्यंप्राप्तिकस्य विसर्जनीयस्य स इत्यस्यैववाधः नतु शर्परे विसर्जनीय इत्यस्यतेन वासः क्षौममित्यादौ विसर्ग एवेतिदिक् ॥

## पदान्ताद्वेतिविकल्पापवाद इति ।

ननु नित्यशास्त्रस्यविकल्पापवादत्वं शेषाद्विभाषेति सूत्रस्थभष्य विरुद्धम् तत्रहिनित्यविधीनांपक्षे चरितार्थतोक्तेतिचेन्न अपवाद इत्यस्य वाधकइत्यर्थेन तल्लेखात् तथाच तदभावपक्षे चरितार्थेनानेन परत्वात् तस्यवाध इतितत्वम् ॥

## दीर्घस्यायं तुगिति ।

ननु परत्वात् तस्मादित्युत्तरस्येतिपरिभाषया दीर्घात्परस्य छस्यतुक् इत्यर्थेछस्य तुकस्यात् तथाच छकारोपरि चर्त्वेन चकारस्य श्रवणंस्यात् सन्निपातपरिभाषया चर्त्ववारणेऽपि छद्वयंश्रूयेदित्याह दीर्घस्यायंतुगित्यादि मूले ॥

## मातुःकृपेति ।

ननु मातुःकृपेत्यत्र विसर्गस्य प्रत्ययभिन्नत्वादिदु दुपधस्येति षत्वं दुर्वार मितिचेन्न। कस्कादि गणे भ्रातुष्पुत्र शब्दपाठेनैकादेश

शास्त्र निमित्तकस्य विसर्गस्य षत्वन्नेति षत्वाप्रवृत्तेः षत्व तुकोरित्यस्य तुनप्रवृत्तिः पदान्तपदाद्योरेव तत्प्रवृत्तेः वस्तुतस्तु प्रत्ययावयवभिन्न-विसर्गस्येत्यर्थेन नात्र षत्वप्रवृत्तिः अतएव कविभिःकृतमित्यत्र न षत्व मितिदिक् ॥

## चतुष्कपालः ।

ननु सुजन्तद्विस्त्रिसाहचर्यात् चतुरशब्दस्यापि सुजन्तस्यैव ग्रहणेनकृत्वर्थ ग्रहणंव्यर्थमितिचेन्न । तत्परिभाषाया अनित्यत्वेनेहाप्र वृत्तौच तुष्कपाल इत्यत्र विकल्प षत्वापत्तेः। अनित्यत्वेमानन्तुकृत्वर्थ ग्रहणमेवेतिदिक् ॥

## सामर्थ्यमिह व्यपेक्षा ।

अत्र मानन्तु नित्यं समास इति सूत्रे समास ग्रहणमेवात्रैकार्थी भावरूपसामर्थ्याश्रयणेतु तत्रसमासस्यैव लाभेन तादृशसमर्थ पदानु वृत्यैव सिद्धे समासग्रहणवैयर्थ्यं स्पष्ट मेवेतिदिक् ॥

## अनुत्तर पदस्थस्येति ।

ननु नित्यं समास इत्यत्रअनुत्तरपदस्थस्येतिव्यर्थम् इसुसोः प्रत्ययत्वेन प्रत्ययग्रहणपरिभाषया इसुसन्ततदादेः पदस्येत्यर्थेपरमसर्पिरित्यस्य इसन्ततदादित्वाभावेन षत्वाप्राप्ते रित्याशयेनेशङ्कते अनुत्तरपदग्रहणेनपदविशेष्यकतदन्तविधेरपि ज्ञापितत्वात् इसुसन्ततदाद्यन्तपदस्येतिअर्थे षत्वंस्यादिति तद्ग्रहणमित्तारम् इदुदुपधस्येतिषत्वंतु न एतत्सामर्थ्यादिति

ननु कस्कादौ सर्पिष्कुण्डिकाशब्द पाठोव्यर्थोऽनेनषत्वप्रवृत्ते रितितत्सामर्थ्यात् उत्तरपदस्थस्यपि षत्वमित्याह कस्कदिष्विति अय म्भाव असमासे व्यपेक्षाविरहेऽपितिष्ठतु सर्पिः कुण्डकामानयेत्यदौष त्वविधानेन पाठश्चरितार्थइति नच तत्र इदुदुपधस्येति षत्वमितिवा

च्यम् व्यपेक्षायाम् इदम् सर्पिष्कुण्डिकाया इत्यादौ नित्यषत्वार्थं तस्या वाश्यकत्वादिति दिक् ॥

## सुप्रत्यये शिवसस्यर्च्य इति ।

ननु ससजुषोरुरित्यत्र सकारोत्तराकारोच्चारणेन अकारानुबन्धकस्यैव सस्य सजुषशब्दसाहचर्य्येण प्रातिपदिकावयवस्यैव वा रुः स्यादित्याशंक्याह सूत्र जसित्यादि एवञ्च सुप्रत्ययस्यापि रुत्वविधानस्य प्रत्यय इत्यादौ दर्शनेनोक्तानुबन्धकस्य साहचर्य्यस्य चानाश्रयण मिहेति गूढाशयः ॥

## उत्वं प्रतीत्यादि ।

ननु शिवस् अर्च्य इत्यत्र रुत्वे जाते अतो रोरिति उत्वं भवतीति लाघवात् उरेव विधेय इत्याशयेनाह उत्वं प्रतीत्यादि अयम्भावः उविधाने तत्र उत्वस्य चारितार्थ्येन यशोऽत्र इत्यादौ उत्वं न स्यात् रुविधाने तु सर्वत्र रुत्वस्यासिद्धत्वेन उत्वविधानस्य वैयर्थ्येन तत्सामर्थ्यात् न रुत्वमसिद्धमिति दिक् ॥

## आद्गुण एङः पदान्तादिति ।

नच उ वेकृते घटकनिमित्तकत्वेनान्तरङ्गे गुणे उत्वमसिद्धं स्यादिति वाच्यम् नाजानन्तर्य्ये इति निषेधात् इत्याह आद्गुण इति ॥ नच अकारसन्निपातेन जातमुत्वं गुणसम्पादनद्वारा पूर्वरूपे सन्निपातविघातकम् इति वाच्यम् एचोऽयवायाव इति निर्देशेन सन्धिकार्य्ये सन्निपातपरिभाषाप्रवृत्ते रत आह एङ इति ॥

## अप्लुतात् किमिति ।

ननु अतोरोरप्लुतादिति सूत्रे अप्लुतात् ग्रहणं व्यर्थमिति चेन्न एहि सुस्रोत ३ अत्र स्नाहीत्यादौ प्लुते कृते ततः परस्यापि रोरुत्वापत्तेः नच

अत इति तपरकरणेन तद्व्यावृत्तिरितिवाच्यम् प्लुतस्यासिद्धत्वेन तेनाव्यावृतेः नच अप्लुतग्रहणेऽपि प्लुतस्यासिद्धत्वेन उत्वं दुर्वारमिति वाच्यम् तत्सामर्थ्येन प्लुतस्यसिद्धत्वबोधनात् नच तपरकरणेनप्लुतः सिद्ध इति वाच्यम् दीर्घात् परस्य रोरुत्वनिवृत्या चरितार्थत्वात् नच प्लुतस्य सिद्धत्वज्ञापने तपरकरणेनैव व्यावृतिः अप्लुतात् ग्रहणं न स्वांशे चरितार्थमिति वाच्यम् तत्सामर्थ्येन प्लुतत्वव्यवहारस्य सिद्धत्वज्ञापनेऽपित्रिमात्रिकत्वस्यासिद्धत्वादित्यलम्।

## रोरित्युकारानुबन्धेत्यादि।

ननु रु इत्यानुपूर्वीग्रहणे एकदेशविकृत न्यायेनशिवोऽर्च्य इत्यादौकथञ्चिदुत्वसिद्धावपि देवरुहि देवरुँ वर्ण इत्यादौ उत्वव्यावृत्यर्थमकारेत्संज्ञकरेफस्यउरित्यर्थो वाच्यः एवञ्चानुबन्धरहितस्यैवरस्योपस्थितौ रेफमात्रस्यैवोत्वंजायते तथाच लाघवात् रमात्रस्योच्चारणेन सिद्धौविशिष्टोच्चारणं व्यर्थमित्याशयेनाह रोरित्यादि तेन प्रातरत्रे यादौनोत्वमिति नच विशेषणस्यविद्यमानत्वेसत्येवेतरव्यावर्तकत्वेन कथमनुबन्धेनव्यावृतिरिति वाच्यं तस्योपलक्षणत्वादितिदिक्।

## असन्धिःसौत्र इति।

वस्तुतस्तु सान्तं रांतंवानुकृत्य रोर्यत्वलोपविधानेन तस्यासिद्धत्वेन असन्धिर्न्याय्यएवेति नच प्रकृतसूत्र प्रवृतिं विनाप्रकृतसूत्रानिष्पत्यान्योऽन्याश्रयइति वाच्यम् सूत्रप्रवृतिं प्रतिसूत्रार्थज्ञानस्य प्रयोजकत्वेपि सूत्रस्वरूपस्याप्रयोजकत्वात् इति।

## अशि किमिति।

ननु भो भगोरिति सूत्रे अश् ग्रहणम् किमर्थम् नचाशि ग्रहणाभावे देवा सन्तीत्यादा वश् परत्वाभावेऽपि रेफस्य यत्वापत्तिरिति वाच्यम्। यत्वविधायक शास्त्रस्य बिसर्ग विधायक शास्त्रदृष्ट्यासि

द्व-वेन विसर्गस्यैव प्रवृत्तेः। नच स्थानिवद्भावेन विसर्गे रुत्वातिदेशा त्विसर्गस्यैव यत्वापत्तिरिति वाच्यम्। अनल्विधाविति निषेधादिति चेन्न। अल्त्वव्याप्यधर्मघटितातिदिदिक्षित धर्म निमित्तकेविधावे वानल्विधाविति निषेधप्रवृत्यङ्गीकारेण प्रकृतेऽतिदिदिक्षितस्य रुत्व स्यालत्वव्याप्यधर्मघटितधर्मत्वाभावेनानल्विधाविति निषेधाप्रवृत्या- स्थानिवद्भावेनरुत्वानयने बाधकाभावेन यत्वापत्तेर्दुर्धरत्वादिति। यदितुअत्र रोरीत्यतः रपदमनुवर्त्य रोरेफस्य यत्वामित्यर्थः रत्वंच अल्मात्र वृतिताअशग्रहणमुत्तरार्थमिति बोध्यम्॥

## पदान्तस्यकिम्तोयम्।

ननु भोशब्दादिपूर्वकयस्य पदान्ते एव सम्भवात् पदान्तग्रहणं व्यर्थमिति शंकते पदान्तस्यकिमिति भो भगो इत्यादीनां विच्छेदादि हनानुवृतिस्तथा च तोयमित्यत्र दोष इत्युतराशयः।

## अणः किम्।

ननु ढ्रलोप सूत्रे अणग्रहणेऽपि अचश्चेत्यस्योपस्थितौ अच एव दीर्घो भवतीति अणग्रहणं व्यर्थमितिचेन्न अणग्रहणसामर्थ्येन पूर्वणकारेण प्रत्याहाराश्रयणात् तेन न तृढ इत्यादौदीर्घः नच उत्तर पदाधिकारसत्त्वेन तत्परतएव दीर्घविधानेन न दोषः नच पुनारमते इत्यादेरसिद्धिः ऊरपरइति भाष्यप्रयोगेण उत्तरं च तत्पदमिति यौ- गिकस्यग्रहणादितिवाच्यम् पूर्वग्रहणेनानुत्तरपदेऽपितत्प्रवृ तेरितिदिक्

ननु ढ्रलोप सूत्रे तस्मिन्निनितिपरिभाषयैव पूर्वस्येत्यर्थलाभेपूर्व ग्रहणं व्यर्थमिति चेन्न तदभावेऽत्रोत्तरपदाधिकारसत्वेन तस्य समासचरमावयवे रुढतया लीढ अजघीइत्यादौदीर्घानापतेः तदग्रह- णंतु अनुत्तरपदेऽपि पूर्वमात्रस्यदीर्घार्थमिति नच पुनारमते इत्यत्रैव दोषसत्वेन स्थलान्तरं व्यर्थमिति वाच्यम् उत्तरंच तत्पदमितियोगा श्रयणेनापितत्सिद्धेरित्याशयात् नच सूत्रे अणग्रहणसामर्थ्यात् नतद

नुवृत्तिरिति वाच्यम् नृ शब्दोपपदकराधातोः कप्रत्यये सिद्ध नृरशब्दात् आचारक्विन्तात् कर्तृ क्विपि अलोपे नृर्शब्द रमण शब्दयोः समासेर लोपेदीर्घन्याबृतयेअणग्रहण् चारितार्थ्यादिति तदधिकारवाध कल्पनापे क्षयाउत्तरपद घटके ढकार रेफलोपनिमितकेइत्यादि स्वीकारेण आनृढः आघृढ़इत्यदौ अण्ग्रहणं चरितार्थमितिदिक्॥

अकोः किम ।

ननु अकज्घटितस्य एतद्तद्शब्दत्वाभावात्कः प्रसंगतत्रेतिशंकते अकोकिमितत्सामर्थ्येनसिद्धतन्मध्यपतितन्यायेन तस्यापि तद्शब्दत्वादिति उत्तरमेषकः रुद्र इति ।

अनञ्समासेकिमिति ।

ननु समासेनञर्थस्यविशेष्यतयाभानात् तद्विशेषणवोधकस्योंपसर्जनतया तत्रत्यदादीनाम इत्यस्य प्रबृतौ हल्ड्यादिलोपएवतत्रेत्याशयेन शंकते अनजः किमिति तत्सामर्थ्येन तत् विशेषणीभूतस्यनोपर्सनत्वमित्युत्तराशयः॥

इति पंक्ति प्रभायां पञ्चसन्धि प्रकरणमिति शम्।



# अजन्तपुल्लिङ्ग प्रकरणम् ।

## पूर्वसूत्रेण सिद्ध इति ।

ननुराजन्ङस पुरुषसुङ्त्यस्य धातुभिन्नत्वेन प्रत्ययभिन्नत्वेन प्रत्ययान्तभिन्नत्वेन च पूर्वसूत्रेणप्रातिपदिक संज्ञासिध्दा समासग्रहणं-कृतद्धितसूत्रेव्यर्थम् नच तादृशसमुदायस्य प्रत्ययान्तत्वेन कथं तद्भिन्नत्वमितिवाच्यम् प्रत्ययग्रहणपरिभाषया तदाद्युपस्थितौतद्वि-शेष्यकप्रत्ययप्रकारकतदन्तविधौ प्रत्ययान्ततदादिभिन्नस्येत्यर्थेतादृश-समुदायघटक राजन्ङस् इत्यादेः प्रत्ययान्ततदादित्वेऽपि समुदायस्य तद्भिन्नत्वाद्विति चेन्ननियमार्थं समासग्रहणसत्वात् तदाकारश्च यत्र-संहातेपूर्वोभागःपदंतस्यभवीत चेत्तर्हिसमासस्यैवेतितेन समासेप्रा-तिपदिकसंज्ञासम्पादनद्वारा वाक्यस्यसंज्ञाव्यावृत्यर्थं समासग्रहण-मिति नचजन्मवानित्यस्य पूर्वभागपदकसमुदायत्वेन नियमाक्रान्तत्वा त्प्रातिपदिकसंज्ञानस्यादितिवाच्यम् यत्रसमुदायेपूर्वोभागः पदमुत्त-रस्तुप्रत्ययोनेत्यादि नियमशरीरेण जन्मवान्नित्यस्यनियमानाक्रान्त-त्वात्नचैवं राजा इयानितिसमुदायस्यउत्तरप्रत्ययघटितत्वेन निय-मानाक्रान्तत्वात्संज्ञास्यादितिवाच्यम् उत्तरप्रत्ययस्यपूर्वपदविहि-तस्यैवग्रहणेनात्र तथाविधप्रत्ययाभावेननियमाप्रवृत्तेरितिदिक् ॥१॥

## प्रातिपदिकग्रहण इत्यादि ।

ननुङ्यापप्रातिपदिकादितिसूत्रेङ्याब्ग्रहणंव्यर्थम् नचस्मा गौरीत्यादेः प्रत्ययान्तत्वेन प्रातिपदिकत्वाप्राप्तौ ततः स्वादिविधा-नार्थं तद्ग्रहणमितवाच्यम् प्रातिपदिकग्रहणेलिंगबोधकप्रत्ययीविशि-स्यापि ग्रहणमितिपरिभाषया स्त्रीप्रत्ययान्ते प्रातिपदिकत्वारोपेण तत्-सिद्धेरिति चेन्नङ्याबन्तात् तद्धितोत्पत्तिर्यथास्यात् ताभ्यांप्राङ्मा-

भूदित्येवमर्थं तत्सत्वात्तेन आर्यशब्दात्टापि ततः कनिह्रस्वेउदीचामातः स्थानेइति पाक्षिकेत्वेआर्यिका आर्यकेतिरूपद्वय मन्यथापूर्वं कीननित्येत्वे एकमेवस्यादिति एवं लोहितिका लोहिनिकेतिरूपद्वयमन्यथा लोहितिकेत्येकमेवस्यादितिदिक् ॥ २ ॥

## रामः।

ननु अनुबन्धेऽल्त्वव्यवहाराभावेन तद्वृत्तिधर्मानयनेऽनल्विधाविति निषेधाप्रवृत्तेर्घस्त्रवृत्तिहलत्वस्यातिदेशात् ततः परस्यसुलोपस्यदुर्वारतया रुत्वंकथंकिञ्चरुत्वेऽपितस्य स्थानिवद्भावंप्रति असिद्धत्वेनरामस्वृत्ति पदत्वस्य रान्तेदुर्लभतयाविसर्गोऽपि कथमितिचेन्नप्रत्यय इत्यादिनिर्देशेन अनुबन्धगतहलत्वमादाय सुलोपास्यस्थानिवत्सूत्रंप्रति असिद्धत्वाभावस्य ज्ञापनेनद्वयोरप्युपपत्तेरित्याशयेनाहरुत्वविसर्गाविति ॥३।

## रामौ।

ननुराम औइतिस्थितेवृद्धिं बाधित्वा प्राप्तपूर्व सवर्णदीर्घस्यनिषेधेऽपि भूष्टावसरन्यायाद् वृद्धिर्नस्यादितिचेन्न तौसत् इत्यादि निर्देशेनात्रशास्त्रेतन्न्यायाप्रवृतेः वस्तुतस्तु उद्देश्यतावच्छेदकाक्रान्तिरवसरइति वृद्धिविधेरुद्देश्यतावच्छेदकस्यसत्वेननतन्न्यायावसरइत्याशयेनाह वृद्धिरेचीति ॥४॥

## रामाः।

राम शब्दाद्जसिजकारेत्संज्ञालोपयोः प्रथमयोः पूर्वसवर्ण इति दीर्घेरुत्वेवसर्गेरामा इति नच अतोगुणेइति पररूपंस्यादिति वाच्यम् पश्चाद्दीर्घप्रवृत्तेः नच अतोगुणे एतस्यविषये सर्वत्र वृद्धिदीर्घयोः प्राप्तिसत्वेनास्यनिरवकाशत्वेनापवादत्वं तथाच वृद्धेरिवदीर्घमात्रस्यबाधःस्यात् बाधसामान्यचिन्तापक्षाश्रयणादितिवाच्यम् पुरस्ता

दपवादन्यायेन अकः सवर्णेदीर्घइत्यस्यबाधेऽपिपूर्वंसवर्णदीर्घबाधेमाना भावादिति ॥ ५ ॥

सम्बुध्याक्षिप्तस्येत्यादि ।

ननु हेकुल इत्यत्रसंबुद्धिलोपार्थं ह्रस्वात्परस्य संबुद्ध्यवयवस्य हलोलोपइत्यर्थ आवश्यकः तथाच हेकतरत् इत्यत्र तकारलोपःस्यादत आह सम्बुध्याक्षिप्तस्येत्यादि अयम्भावः आक्षिप्तांगे एङ्ह्रस्वयोरन्वयः अंगस्य च हलिहल्येवसम्बुधेः तथाच एङन्ताद् ह्रस्वान्तादंगादहल्लु प्यते सम्बुद्धेश्चेदिति अत्राङ्गस्य सम्बुद्धावन्वये हलिएङ्ह्रस्वयोरन्व येहेकतरत्इत्यत्र लोपः स्यात् यदिचपूर्वोक्तार्थकस्यांगस्य सम्बुद्धाव न्वयउच्यते तर्हि हे कुल इत्यत्रदोषः वस्तुतस्तु प्रकृत्यवयवस्यएङः साहचर्य्यात ह्रस्वस्यापि प्रकृत्यवयवस्यैवग्रहणमिति सकलेष्टसिद्धिः किमाक्षेपेणेतिदिक् ॥ ६ ॥

एङ्किम् ।

ननु हे हरे हे विष्णो इत्यादीनां लोपविधेः सर्वतोवलवत्त्वेनपूर्व सुम्बुद्धिलोपेततःप्रत्ययलक्षणेनगुणेसिद्धिः हे से इत्यर्थन एह्रस्वादित्ये वास्तु प्रत्यहाराश्रयणं व्यर्थमित्याशयेन पृच्छतिएङीकम् सर्वत्र लोप विधेः बलवत्वेमानाभावेनपरत्वान्नित्यत्वाच्चगुणे लोपानापतिरतः तद्ग्र णमित्पुत्तराशयः नचापरनिमितकत्वेसतिआदेशबिधायकत्वरूपांतर ङ्गत्वस्प लोपे सत्वेन पूर्वलोपेततोगुणे न दोषइति वाच्यम् निरवकाश त्वेनगुणस्यापवादत्वात् लोपस्य तुनापवादत्वम् तितउ शब्दात्णि चिटिलोपेक्विपि निष्पन्नतितशब्दात् सम्बुद्धौ लोपस्यचारितार्थ्यात् गुणस्यतु न प्राप्तिः अल्लोपस्यस्थानिवद्भावात् नचगुणे कृतेसन्निपात परिभाषया न लोप इति वाच्यम् सम्बुद्धि लोपेतस्या अप्रवृतेः इति ॥

पदव्यवायेऽपीति ।

ननु अट्कुप्वाङितिसूत्रे आङ् व्यर्थमटाव्यवायेनैवसिद्धेरित्ये तआहपदव्यवयेपि इत्यादि तेन पर्य्याणद्धमित्यत्रणत्वसिद्धिः ॥

नन्वत्र नुमग्रहणेतृंहणमित्यादौणत्वं न स्यादत आहनुमग्रहण मनुस्वारो पलक्षणमिति ननुअनुस्वारस्याकारोपरिपाठेन अत्रैवसिद्धि रतआह तच्चाकर्तुमित्यादि ॥ ८ ॥

## तदादिकिम्।

ननुयस्मात् प्रत्ययविधिरितिसूत्रे तदादिग्रहणंव्यर्थमिति चेन्न-भवामीत्यादौ भूशब्दात् विहितेमिपितस्यांगत्वेऽपि विकरणीवशिष्ट-स्यभवइत्यस्य अंगसज्ञाया अभावेन दीर्घानापत्तेः नचंअतोदीर्घोयञि ति सामार्थ्यात्तदादेः सज्ञेतिवाच्यम् नचहृयधातोः यङ्लुकियाहामी-त्यत्रपिपठिषामीत्यादौ च सूत्रसार्थक्यमआद्यस्यछान्दसत्वात् द्विती-येऽपिस्थानिवद्भवादितिवाच्यम् यङ्लुकोलोकेऽपि प्रयोगात् पूर्वमात्र-स्यविधौस्थानिवद्भावेऽपि अत्रतदभावात् अतोदीर्घइत्यस्यांगाधिका-रात् पृथक्पाठेतु करोमीत्यादौ गुणानापत्तिदेषः अस्यापिपृथक्पाठ स्तुनसम्भवति अशब्दात् आचारक्विबन्तादघीञ अतोलोपे तस्य हरि-शब्देनसमासेतत्रगुणापत्तेः नचसूत्रे प्रथमोपात्तविधिग्रहण त्यागेबीजा-भावइतिवाच्यम् विधिग्रहणेएव तदादिग्रहणस्य फलसत्वादन्यथा भव-इत्यतः परमिप्प्रत्ययेऽङ्गत्वंस्यादेवकिं तदादि ग्रहणेनेत्यलम् ॥ ९ ॥

## विधिकिम्।

ननु यस्मात्प्रत्ययविधिरित्यत्रविधिग्रहणं व्यर्थमिति चेन्न स्त्री ईयतीत्यत्रईयत्प्रत्यये स्त्रीशब्दस्याङ्गसंज्ञायाम् इयङापत्तेः नच अभ्या-सस्यासवर्णेइत्यतः असवर्णपदानुवृतौ वाम्शसोरितिसाहचर्य्येणसु-प्येवप्रवृतौवात्रन दोषइतिवाच्यम् अशब्दाद्औप्रत्ययेवृध्दौ वारि-औइत्यत्रनुमापत्तेः नचतद्ग्रहणेऽपि सुनिरूपितांगत्वमादाय नुमदुर्वारः प्रत्यासत्या अंगसंज्ञानिमितकप्रत्यये एवनुमःप्रवृत्तेः ॥१०॥

## प्रत्ययेकिम्।

ननु यस्मात् प्रत्ययविधिरित्यत्र प्रत्ययेकिम् इतिचेन्न प्रत्यय-विशिष्टस्यांगसंज्ञायां रामाभ्यामित्यादौदीर्घानापत्तेः नच उत्तमैका-

भ्यामित्तिनिर्देशेन अंगावयवस्य अतोदीर्घइत्यर्थेनदोषइतिवाच्यम् नि-र्देशेनखण्डनस्यायुक्तत्वात् ततोऽधिकस्यांगत्वे देवदत्तओदनमपाक्षीत् इत्यादौलुङ्निरूपितांगसंज्ञा देवदत्तादेः स्यादितिदोषसत्वाच्चेतिदिक्

## णत्वंरामेण ।

ननु जातिरूपस्यणत्वस्यनित्यत्वात् तस्यविधानासम्भवेन ण-त्वंरामेणेतिविरुद्धमिति चेन्नशाब्दिकनयेशब्दस्यनित्यत्वेन धर्म्मस्यैव-विधानात् अतएव उक्तंभाष्ये कुत्वंकस्मान्नभवतीत्यलम् ॥ १२ ॥

## रामाय ।

रामङे इतिस्थितेङेर्यादेशे सुपिचेतिदीर्घे ततसिद्धम् ननुसुप्त्वा-भावात् कथंदीर्घइति नचस्थानिवद्भव इतिवाच्यम् अनल्विधाविति तन्निषेधात् इतिचेन्न स्थान्यवयवाल्वृत्यल्मात्रवृत्तिधर्म्मघटितानि-दिदिक्षितधर्म्मनिमितकेविधौ अनल्विधावित्यस्यप्रवृत्तेः यञ्त्वस्य-स्थान्यवयवेऽवृतित्वान्नप्रवृत्तिरिति ॥ नचैवमपि सन्निपातपरिभाष-या नदीर्घइतिवाच्यम् कष्टायेतिनिर्देशेनदीर्घविधौसन्निपातपरिभा-षाया अनित्यत्वात् इतिशम् ॥ १३॥

## बहुवचनेकिम् ।

ननु बहुबचनग्रहणंव्यर्थं नचरामइत्यत्रएत्वापत्तिरितिवाच्यम् असौझल्येदितिन्यासेना दोषात्दितिचेन्नरामस्येत्यत्रएत्वापत्तेः शपी-तिन्यासेनादोषस्तुनशक्त्यन्तरकल्पनेगौरवात् नच सकारात्पूर्वं लो-पोव्योर्वलीति लुप्तनिर्दिष्टयकारः तथाचझलादित्वाभावात् नदोषइति वाच्यम् रामाभ्यामित्यत्र परत्वादेत्वापतेरित्यलम् ॥ १४ ॥

## झलिकिम् ।

ननु बहुवचनेझल्येदित्यत्र झल्ग्रहणंव्यर्थं नच रामइत्यादौ एत्वंस्यादितिवाच्यम् उतोवृद्धिरित्यतः हल्पदानवृत्तौ दोषाभावात

इतिचेन्नरामआमइतिस्थिते नुटिदीर्घं वाधित्वापरत्वादेत्वापत्तेः नच-
नित्यत्वाद्दीर्घः शव्दान्तरस्यप्राप्तिसत्वेनानित्यत्वात् नच प्रतिपदो
क्तत्वाद्दीर्घः निरवकशत्वेएवतस्य वलवत्वात् इतिदिक् ॥ १५ ॥

## सुपिकिम् ।

ननु सुपिचेत्यत्रङेभ्यामि इतिपाठयँ वहुवचनेभल्येदिरयत्र
वहुवचनग्रहणं च नकार्य्यमित्याशयेन शंकते सुपिकिम् उत्तराशयस्तु
उत्तरत्रानुवृत्यर्थं तद्ग्रहणस्यावश्यकत्वेन वहुवचग्रहणस्याप्यावश्यक
त्वम्सुप्फलंतु पचध्वमित्यत्रएत्वनिवृतिरिति तत्वम् ॥ १६ ॥

## जश्त्वमिति ।

राम शव्दात् ङसिटाङसीतिआतिदीर्घे रामादिति अत्रजश्त्व
स्य वावसाने इति चर्त्वस्य च प्राप्तौ चर्त्वस्यासिद्धत्वात् पूर्वं जस्त्वं
ततः चर्त्वमिति क्रमः अतएव तत्रतत्रजश्त्व चर्त्वे इत्युक्तिः संगच्छ
ते ॥ अत्र तद्प्राप्तियोग्येऽचरितार्थं तत् कृते चरितार्थमितिविषयकेन
तक्रन्यायेन जश्त्वंवाधित्वा चर्त्वमिति तु न युक्तम् तेन न्यायेन वाधे
अपावादे जातेपुनरुत्सर्गस्याप्रवृत्तेः अतएव षड्षट् इति रूपद्वयमन्य
था पूर्वषकारस्य षकारे जश्त्वाप्रवृत्तौषष् इति पक्षेषडिति रूपापत्तौटा
न्तरूपंनस्यादिति ष्णान्तापट् इति निर्देशेन स्थानमात्रकृतान्तर्य्येण
पकारस्यटकार इति रीत्या वाधवरणंतुहेयमेव तन्निर्देशेन न्यायाप्रवृ
तेरेववक्तुंशक्यत्वात् तृपाद्यांतन्न्याप्रवृत्तेश्चात एव पक्वइत्यत्र तकार
स्य वकारे कुत्वसिद्धिः-परेतुनिरवकाशत्वेनवाधित्वा चर्त्वमितिवदन्ति
तदीप न गौरवात् रूपासिद्धे जश्त्व चर्त्वे इत्यादि ग्रन्थासंगतेश्चेत्य
धिकमन्यत्रस्पष्टमिति ॥ १७ ॥

## रामस्य ।

रामङस् इतिस्थिते ङसःस्यादेशे सस्यद्वित्वेतत्साधु नचसका
रस्य स्थानमात्रान्तर्य्यात् तकारः स्यादिति वाच्यम् स्थानवाह्यप्रयत्नो

भयान्तर तस्य सकारस्यैवविधानात् अतएव सस्यार्धधातुके इति सस्य तकार विधानं चरितार्थ मन्यथा चर्त्वेनसिद्धेः किंतेन तदाहसस्यसए चेत्यादि ॥ ननु वत्स्यतीत्यत्र द्वितीयो नस्यात् चयोद्वितीय इति प्रति चर्त्वस्यासिद्धत्वात् इति चेन्न चयोद्वितीय इति वार्तिकाग्रेसश्चेति पठित्वा चयपदमनुवर्त्य सकारस्थानिकचयोद्वितीय इत्यर्थेन सामर्थ्यात् असिद्धत्वबाधादिति ॥ १८ ॥

## रामाणाम् ।

राम आम् इति स्थिते नुटि नामीतिदीर्घेरामाणम् नच परत्वात् सुपिचेत्यस्यैवन्याय्यत्वेन नामीत्यस्योपन्यासो न युक्तः इति वाच्यम् सन्निपातपरिभाषयासुपि चेत्यस्याप्रवृतेः नचोक्तपरिभाषया नामीत्यस्यापि प्रवृतिर्नस्यादितिवाच्यम् आरम्भसामर्थ्यात् परिभाषाबाधादिति दिक् ॥१६ ॥

## इणकोःकिमिति ।

नच इणकोरिति अधिकारसूत्रंव्यर्थमिति वाच्यम् रामस्येत्यदौ षत्वापत्तेः ननु सकारोच्चारणान्नषत्वमिति नचामुष्येत्यादौषत्वानापत्तिरितिवाच्यम् आमुष्यायणेत्यादि वार्तिकीनर्देशात्षत्वसिद्धेरितिचेन्न अटतीति अट् जारस्य अट् जारस्याट् षष्ठीसमासेषष्ठ्याआक्रोशे इति अलुकि ततोणिचिटिलोपेकर्तृक्विपियकारलोपे सौजरा औजारषौ इत्यादि षकारोच्चारणे जारट् जारषौ इत्यादि फलभेदसत्वात् किञ्च विश्वपासु अत्रषत्वापत्तिः सकारोच्चारणंतु लिट्सु इत्यादौ धुट्सम्पादनेनचरितार्थ मिति ॥ २० ॥

## आदेशप्रत्ययोः किम् ।

ननु इणकोरितिसूत्रमेवविधायकमस्तु आदेशप्रत्ययोरिति व्यर्थमिति नचतिस्रइत्यत्र षत्वंस्यादिति वाच्यम् । नरपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् । इति षत्वनिषेधात् इति चेन्नसुपिसौ इत्यत्रधात्व

वयवस्यषत्वापत्तेः नचेदानी शासिवसिघसीनामिति नियामकंस्यात् नियमाकारश्च सान्तधातोः षत्वंचेत्तर्हि एषामेवेति न दोष इति वाच्यम् निष्ठायामनिटांधातूनां चेत्तर्हिएषामितिविपरीति नियमापत्तौ सुपि सोइत्यत्रषत्वस्यदुर्वारत्वात् किञ्च बाढशब्दस्यसाधाद्वेशेसिसाधयिषति तिसृणामित्यादौ षत्वापतेरिति ॥ २१ ॥

## तदन्तस्यापिसंज्ञेति।

ननु परमसर्वादीनांसर्वनामसंज्ञानस्यात्तेषाङ्गणे पाठाभावात् इति चेन्नद्वन्द्वेचेति ज्ञापनेन तदन्तस्यापिसंज्ञासिद्धेः अयम्भवः प्रयोजनंसर्वनामाव्ययसंज्ञायामिति भाष्योक्तेः शब्दस्वरूपं विशेष्यंकृत्वासर्वादिप्रकारकतदन्तविधौ परमसर्वादीनामपिसंज्ञासिद्धि रन्यथाद्वन्द्वस्य वर्णाश्रमेतरेत्यस्यगणेपाठाभावेन संज्ञाया अप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव तदन्तसंज्ञाफलं तु परमसर्वत्रपरम भवकानित्यादौत्रलकच्सिद्धिः ॥२२॥

## सर्वे।

सर्व शब्दात् जसि जसःशीतिश्यादेशेगुणे सर्वे इति सिद्धं ननु अर्वणस्त्र सावनञ इति विहितत्रादेशस्य सर्वादेशत्वाभावायावश्यिकया नानुबन्धकृतमनेकाल्त्वमिति परिभाषया शकारस्याल्त्वाभावात् कथमनेकाल्त्वात्सर्वादेश इति चेन्न इत्संज्ञकत्वरूपानुबन्धत्वस्य सर्वादेशं विनादुर्लभत्वेनपरिभाषाविषयाभावात् तदाह नचेत्यादि इत्संज्ञायोग्यत्वमनुबन्धत्वमितिस्टीकारेतु शित्वात्सर्वादेश इतिबोध्यम् ॥२३

## सर्वस्मात्।

सर्व सब्दात् ङसः ङसिङ्योरितिस्मादादेशे सर्वस्मादिति नच तकारस्ये त्संज्ञास्यादिति वाच्यम् नविभक्तौतुस्मा इति निषेधात् न चेत्संज्ञाप्रवृत्तिकाले न विभक्तित्वज्ञानमिति कथंनिषेधप्रवृतिरिति वाच्यम् विभक्तावित्यस्य विभक्तित्वयोग्येइत्यर्थेनप्रवृति सत्वात् अत

एव तुग्रहणं चरितार्थमिति वस्तुतस्तु उपसञ्जनिष्यमाण न्यायेन न पूर्वं संज्ञेति लक्षणाश्रयणं व्यर्थ मितितत्वम् ॥ २४ ॥

## सर्वेषाम् ।

सर्व आम् इतिस्थिते आमि सर्व नाम्नःसुडितिसुट् एत्वेषत्वे च सर्वेषाम् नच यदागमन्यायेन सामित्यस्य आमत्वात् नुट् स्यादिति वाच्यम् तक्रन्यायेन सुटोनुड्बाधकत्वात् ॥ नच सन्निपातपरिभाषया एत्वस्यान्तरङ्गपरिभाषयाषत्वस्य च व्यावृतिरिति वाच्यम् अदः सर्वे षामि तन्निर्देशे न परिभाषाद्वयस्याप्यनित्यत्वात् इत्याशयेनाहएत्य षत्वे ॥ २५ ॥

## उभशब्दोद्वित्वविशिष्टस्येति ।

ननु द्वित्वविशिष्टार्थवाचकोभशब्दात् अनन्वितार्थ विभक्ति विध नापेक्षयानुवादकविभक्तेर्न्याय्यतया द्विवचनमेवभवतीतिसिद्धान्तः सर्व नाम संज्ञाप्रयुक्तकार्य्याणां द्विवचनविषयेऽनवकाशाद् उभशब्दस्य स र्वादिगणेपाठो व्यर्थः नच उभाभ्याम् हेतुभ्यामित्यत्र सर्वनाम्नस्तृती· येति तृतीया विधानार्थं पाठइति वाच्यम् निमित्तपर्य्यायप्रयोगे इति वार्त्तिकेनतत्सिद्धेः नच प्रायग्रहणाद्सर्वनाम्नः प्रथमाद्वितीयेनभवत इतितयोर्विधानायपाठ इति वाच्यम् प्रायग्रहणात् उभशब्दातिरिक्ता सर्वनाम्नः प्रथमाद्वितीययोरभावात् इति चेन्न उभशब्दादकज्सिद्ध येगणेपाठसत्वात् तेनोभकांवितिरूपंसिद्धयति नच कप्रत्ययएवास्तु उभादुदात्तोनित्यमितिसूत्रे योगविभागलब्धेनोभशब्दादयच् नित्यम् स्वार्थेइत्यर्थकेननित्यमितिसूत्रेणायजापत्तेः नचाकचिकृतेकथंनायजिति वाच्यम् उभयोऽन्यत्रेतिवार्तिकानुरोधेन द्विवचनपरत्वाभावेएवाय ज् विधानेनाक ज् विशिष्टस्यतन्मध्यपतितन्यायेनोभग्रहणेनग्रहणे द्विवचन परत्वस्यैवसत्वाद् कप्रत्ययेतु तेन व्यवधानेभवतिद्विवचनपरत्वाभाव इति अकज् दुर्वारःस्यादिति ॥ २६ ॥

## उभयशब्दस्यद्विवचनं नास्तीति।

तद्धितश्चासर्वविभक्तिरिति सूत्रे भाष्यकृतापरिगणनं कृत्वाउभयोमणि रुभयेदेवमनुष्या इत्येकवचनान्तवहुवचनान्ते उदाहरणेदत्ते तत्र द्विवचनान्तोदाहरणादानेनोभयशब्दस्य द्विवचनं नास्तीतिकैयटाशयः। हरदत्तमहाशयास्तुद्विवचनमस्तीतिवदन्ति तेषामयमाशयः उक्तसूत्रस्थपरिगणनस्यपचत्तिकल्पमित्यादौ चारितार्थ्येनोभयशब्दाद्विवचनाभावकल्पनेमानाभावइति वस्तुतस्तु पूर्वमतमेवयुक्तमिति तथाचोभयशब्दाज्जसिसर्वनाम संज्ञायां श्यादेशेगुणे उभयेइतिसिद्धम् नचायजन्तस्यस्थानिवद्भावेनतयप् प्रत्ययान्ततयाप्रथमचरमेतिविकल्पसर्वनाम संज्ञा स्यादितिवाच्यम् अपरनिमितकत्वेन नित्यसर्वनामसंज्ञायाअन्तरङ्गत्वात्तदाहतस्माज्जसीत्यादि अन्येतु अयच्प्रत्ययान्तरमिति न प्रथमचरमेत्यस्य प्राप्तिरित्याहुः॥ २७॥

## डतरडतमाविति।

ननु संज्ञाविधौप्रत्ययग्रहणेतदन्तविधिर्नास्तीतिपरिभाषया डतरडतमशब्दे तदन्तविधिनिषेधः स्यात् नचात्रमानाभाव इतिवाच्यम् सुप्तिङन्तमितिसूत्रेऽन्तग्रहणस्यैव मानत्वादन्यथा तदन्तविधिनैवान्तलाभेकिमन्तग्रहणेनातए। इदूदेद्विवनमितिसूत्रे द्विवचनपदे नतदन्तविधिस्तेन वध्वगारमित्यादौ न प्रगृह्यसंज्ञेति चेन्न केवलयोस्तयोर्गणपाठे फलाभावेनोक्तपरिभाषाया इहाप्रवृत्तेरिति वदति यद्यपीत्यादिना॥ २८॥

## नवहुव्रीहौ।

ननु वहुव्रीहिसमासघटकांनामुपसर्जनत्वेनैव सर्वनाम संज्ञानिषेधः सिद्धःकिम् सूत्रेणेति चेन्न वहुव्रीहिसमासवोधकालौकिकविग्रहवाक्ये संज्ञानिषेधार्थं सूत्रसत्वात् तदाह वहुव्रीहौचिकीर्षितइति

तेनयुस्मद्ङस् इत्यलौकिकवाक्ये सर्वनामसंज्ञानिषेधेनाकचोऽभावे समासेसुपोलुकिकपि युस्मच्छब्दात्स्वार्थेकनि प्रत्ययोत्तरपदयोश्चेति मपर्य्यन्तस्यत्वदादेशे त्वत्कपितृक इत्यादिसिद्धिः फलमन्यथाकाच त्वकत्पितृक इतिस्यात् नच समासोत्तरसर्वनामसंज्ञानिषेधभावित्वेऽकृतव्यूहपरिभाषयाप्रक्रियावाक्येऽपिसर्वनाम संज्ञान्निषेधसिद्धिःसूत्रंव्यर्थमिति वाच्यम् तत्परिभाषाया अनित्यत्वस्यापि ज्ञापनात् अतएवभवन्तमीतक्रान्तोऽतिभवकानित्यत्राकच्सिद्धिरन्यथोक्तपरिभाषयाप्रक्रियावाक्ये एवसर्वनामसंज्ञा निषेधेऽकज्दुर्लभः स्याद् नचैवमपिसमासवृत्त्येकार्थी भावस्यप्रक्रियावाक्येऽप्यारोपात् समासेइव तत्राषिनिषेधइतिवाच्यम् पदार्थान्तरनिष्ठविशेष्यतानिरूपिकोपस्थीय प्रकारताप्रयोजकत्वरूपोपसर्जनत्वस्य युस्मद्ङसूइत्यत्राभावात् ॥ भाष्यकारस्तु अकच्स्वरौतुकर्तव्यौ प्रत्यंगं मुक्तसंशयावितिभाष्येण त्वकत्पितृकोमकत्पितृक इतिरूपेइष्टापत्तिं कृत्वा सूत्रंप्रत्याचख्यौ नच फलभेदे प्रत्याख्यानमयुक्तमिति वाच्यम् यथोतरं मुनीनां प्रामाण्यादितिदिक् ॥ २९ ॥

## तृतीयासमासर्थेति ।

ननु मासेन पूर्वायेत्यत्रसर्वनामसंज्ञया स्मैस्यादिति नच तृतीयासमास इतिनिषेधइतिवाच्यम् वाक्येतत्प्रवृत्तौ मानाभावादिति चेन्नतृतीयासमासबोधकवाक्येपि संज्ञानिषेधात् नचमानाभाव इतिवाच्यम् विभाषादिक समासेवहुव्रीहावित्यतः समासपदानुवृत्यैवसिद्धे सूत्रस्थसमासपदस्य सामर्थ्यादलौकिकवाक्यपरत्वादितिदिक् ॥ ३० ॥

## समुदायस्येति ।

ननु वर्णाश्रमेतरघटकेतर शब्दस्य द्वन्द्वेचेतिसर्वनामसंज्ञानिषेधेऽपि समुदायस्यसंज्ञायां वर्णाश्रमेतराणामित्यत्रसुट् स्यान्नचावयवस्यनिषेधे फलाभावइतिवाच्यम् समुदायगतकुत्साया अवयवेन

सम्बन्धेऽकजादिप्रवृत्तिरूपफलसत्वात्‌दिति चेन्नद्वन्द्वे इतिप्रथमार्थकसप्तमीसत्वेन द्वन्द्वःसर्वनामसंज्ञकोनेत्यर्थेन समुदायस्यैवनिषेधात्‌ नचावयवस्यनिषेधाभावेसुट्‌ प्रसंगइतिवाच्यम्‌ सर्वनाम्नोविहितत्वाभावेनादोषादित्याह समुदायस्यायमित्यादि ॥ ३१॥

## संज्ञोपसर्जनीभूताइति।

ननु सर्वनामसंज्ञाप्रयुक्तकार्याणां तथा सर्वाद्यन्तर्गणप्रयुक्तकार्य्याणां संज्ञाया मुपसर्जनेचकथं न प्रवृत्तिरिति चेन्न सर्वनामेतिमहासंज्ञाकरणेनप्राधान्येनोपस्थितित्रिषयप्रसिद्धस्वीयार्थवाचकत्वेनोच्चरितसर्वादिशब्दानामेवगणेऽनुकरणसत्वेनेतरेषामनुकरणे मानाभावेनच संज्ञोपसर्जनबोधकानां सर्वादिगणेपाठाभावादित्याह संज्ञोपसर्जनीभूताइत्यादिति ॥ ३२॥

## जसाधारमिति।

ननु विभाषा जसीतिसर्वनाम संज्ञापक्षेश्यादेशवदकजपि स्यादतआहजसाधारमिति अयम्भावः जसीत्याधारवाचकसप्तम्यन्तं तेनचाधेयाक्षेपपवञ्चजसः स्थानिकेकार्ये सर्वनामसंज्ञाविधानेऽपि अकचिसंज्ञाया अप्रवृत्तिरिति नचविद्यमानयोरेवाधाराधेयभावसत्वेनजस्शीशब्दयोस्तदभाव इतिवाच्यम्‌ औपचारिकाधारत्वेनतदुक्तेः यद्वाजसः इइति पृथक्‌पदंषष्ठयालुक्‌ इपदेमदीर्घेकारग्रहणं नपुंसकनिर्देशइ इतीतितत्वम्‌ ॥ ३३॥

## वृत्तिकृतातु।

निर्जरशब्दात्‌ टाङसिङस्सु परत्वात्‌जरस्‌ अदन्तत्वाभावान्नेनादयएवंभिसि ऐसादेशे सन्निपातपरिभाषया नजरसइति सिद्धान्तः ननु इनादेशेइकारोच्चारणेनैवमातिदीर्घोच्चारणेनऐसिऐकारोच्चरणेन पूर्वविप्रतिषेधेनेनातोः सतोः सन्निपातपरिभाषाया अनित्यत्वाद्

जरस् भिसऐसि जरस्ङसित्वेकमेवरूपमिति वृत्तिकृदनूदितंयुक्तमिति चेन्न इकारदीर्घाकारयोर्भाष्ये प्रत्याख्यानात् भिसि अतिजरैरितिभवितव्यंसंनिपातपरिभाषयेति सन्निपातपरिभाषाप्रवृत्तेर्भाष्यकृता कण्ठरवेणोक्तत्वाद् नचेकारप्रत्याख्याने कथम् रामेणेत्यस्यसिद्धिरिति वाच्यम् आङिचाप इत्यत्राङीतियोगविभागेनादन्तस्यैत्वविधानात् नचानेनेत्यत्रलोपः स्यादिवाच्यम् अनाप्यकः इत्यत्रनकारान्तरप्रश्लेषेणानादेशसिद्धेः नच आतिदीर्घाभावे पररूपापत्तिरितिवाच्यम् अकारोच्चारणसामर्थ्येन तस्यबाधात् ऐसि ऐकारोच्चारणन्तुउत्तरार्थं नद्यैरितिसिद्ध्यर्थमितिदिक् ॥ ३४ ॥

## अतोजशत्वंनदत्तः।

दन्तशसितिस्थिते पद्दन्निति दन्तस्य दत् आदेशेपदभसंज्ञयो प्राप्तयोः। आकडारादेकासंज्ञेति विरोधबोधनेप्रकृते निरवकाशत्वाद् भसंज्ञा नच संज्ञा सूत्रस्य विधिनासहैकवाक्यतयार्थबोधनेन भपदघटितेयचिभमित्यस्योपस्थितावपि प्रकृते न भसंज्ञेति वाच्यम् आकडारी यसंज्ञासु यथोद्देशपक्षाभ्युपगमेन भसंज्ञायाम् बाधकाभावादित्याशयेनाह अतोजशत्वंनेति ॥ ३५ ॥

जश्त्वंदद्भ्यामिति। दत् भ्यामितिस्थितेपद संज्ञायां झलांजशोऽन्ते इति जश्त्वं नचात्र झलांजश् झशीति जश्त्वं सिद्धं किं प्रक्रियागौरवेणेतिवाच्यम् दत् सु इति स्थिते झलांजशोऽन्ते इति जश्त्वे चर्त्वेदत् सु इति सिद्धये तदुपन्यासस्यावश्यकत्वादन्यथा चयोद्वितीयस्यादित्याशयेनाहजश्त्वमिति रहस्यम् ॥ ३६ ॥

यलोपः माभ्यामिति। माद्भ्यामितिस्थिते रुत्वेयत्वेहलिसर्वेषामिति यलोपः नचोञिचपदे इत्यत्रपदग्रहणस्योत्तरार्थत्वकथनेन तदुत्तरस्मिन् हलिसर्वेषामित्यत्रापि तदनुवृत्तौ हलादौपदेलोपविधाने न कथं य लोप इति वाच्यम् ङमोह्रस्वादितिव्यवहिते फलकथनेनेहानुवृत्त्यभावादित्याशयेनाह यलोप इति तत्वम् ॥ ३७ ॥

## यूष्णः

यूषन् असिति स्थितेभसंज्ञायाम् अल्लोपोऽनइति अल्लोपे रषाभ्यामितिणत्वे यूष्णइति नच प्रत्यैषिषनित्यत्रजुसोऽभावायावश्यके पञ्चमीसमासपक्षेअचः परस्मिन्निति अलोपस्थानिवद्भावे कथंणत्वमिति वाच्यम् तत्पक्षे अट्कुप्वाङिति णत्वप्रवृत्तेः अत्रपूर्वत्रासिद्धीये न स्थानिवदितिनशंक्यम् संयोगादिलोपलत्वणत्वेषु इति तत्प्रतिवन्धादिति ॥ ३८ ॥

## आतइति

ननु क्त्वः श्नइत्यादौ आकारलोपाय आतोऽनापइतिवार्तिकं तदनुरोधेन सूत्रेधातुपदमपि आवन्तनिवृत्त्यर्थ मितिवाच्यं तथाच हाहान्सान्त्यित्रवाधातुपद व्यावर्तनमयुक्तमिति चेन्न आतोधातोरित्यत्र आतइतियोगविभागेन क्वचिद्धातुघटकाकारलोपमभ्युपेत्य वार्तिकखण्डनेन सर्वत्राधातुघटकस्य लोपेमानाभावेन तस्य हाहानित्यादि प्रत्यदाहरणस्ययुक्तत्वादि त्याशयेनाह आतइत्यादीतिशम् ॥ ३९ ॥

## शेषःकिम्

ननु शेषोध्यसखीति सूत्रेशेषग्रहणंव्यर्थं नच मतिङेइतिस्थिते नदीसंज्ञायामपिघिसंज्ञापत्तौ आटि गुणे च मतयै इत्यनिष्टरूपव्यावृत्तिस्तत्फलमितिवाच्यम् आकडारीयत्वेन नदीसंज्ञाया एवनिरवकाशत्वेनप्राबल्यादिति चेन्नस्पष्टतया तदन्तविधिलाभार्थं तत्सत्वात् ॥ नचगवां पत्यैइत्यादौपतिः समासएव इति नियमेनघिसंज्ञाया अप्राप्त्या नदीसंज्ञाचरितार्थेति कथं नमत्यैइत्यत्र समावेशइतिवाच्यम् नहि एकंलक्ष्यमिति भाष्येणङितिपतिश्चेति विशेषसूत्रेकर्तव्ये सामान्यसूत्र वैयर्थ्यादितिदिक् ॥ ४०

ननुघिसंज्ञा सूत्रेऽसखीतिपर्युदासादेव ह्रस्वान्त इत्यर्थलाभे

ह्रस्वपदानुवर्तनंव्यर्थमिति पृच्छति ह्रस्वौकिम्सखिशब्दात् क्यचिनिष्पन्नदीर्घान्तसखिशब्दसम्भवेन पर्युदासाद् ह्रस्वान्तालाभेनदीर्घान्ते दोष इत्याशयेनोत्तरं वातप्रम्ये इति ॥ ४१ ॥

## यूक्किम्मात्रे ।

ननु शेषोध्यसखीति सूत्रे यूपदानुवृत्तिर्व्यर्था नच ह्रस्वपदानुवृत्त्यादीर्घान्ते दोषाभावेऽपि अदन्तरामादिशब्दे दोष इति वाच्यम् तत्र सत्यपिघि घेदोषाभावात् तथाहि तृतीयैकवचने इनादेशेननिरवकाशेन नादेशबाधः रामस्येत्यादौसत्यपि गुणेक्ष्ङितिविरहः इकपरिभाषोपस्थिते र्गुणाप्राप्तिश्चस्यादादेशे तक्रन्यायेनगुणस्यबाधोवाद्वन्द्वेघीत्यनेनादन्तस्यपूर्वनिपातरूपोऽपिनदोषः पूर्वनिपातप्रकरणस्यानित्यत्वात् अजाद्यदन्तमित्यनेनादन्तस्य घिसंज्ञाऽभावकल्पाद्वान्चद्वन्द्वेघीतिसिद्धेअजाद्यदन्तमितिनियमार्थमितिवाच्यम् उक्तकल्पनयाविधित्वस्यैव न्याय्यत्वात् इति चेन्नमातृ ङे इतिस्थिते घिसंज्ञायां गुणापत्तेः नच ऋदन्तस्यघिसंज्ञायां घेर्ङितीति गुणेसिद्धेऋतोङीति सूत्रेङि ग्रहणेन ऋदन्तस्यनघिसंज्ञेति न प्रकृते दोष इति वाच्यम् अत्रदोषाभावेऽपियूपदाभावे ऋकारान्तस्य नदीसंज्ञापत्तौमात्रे इत्यत्राडापत्तौ तत्र व्यावृत्यर्थं नदी संज्ञा सूत्रे यूपदस्यावश्यकत्वेन लाघवादिहाप्यनुवृत्तेर्न्याय्यत्वात् । एतेन ननुऋदन्तस्यघित्वेऽपि तृतीयैकवचने नात्वापत्तिः कथं न दत्ता नच जननी वाचकमातृ शब्दस्य स्त्रीत्वेन नतत्र नात्वापत्तिरितिवाच्यम् परिच्छेतृ वाचकस्य पुंस्त्वेन तत्रदोषसत्वादिति चेन्न मात्रेइत्यस्य मातृ शब्दायेत्यर्थेन तृतीयैकवचने एव तात्पर्यादितिकेषांचित् कुतर्कजालेनग्रन्थलापनमप्यपास्तम तद्रीत्यापि निर्विवादात् पितृशब्दएवन कथं प्रत्युदाहृत इति शंकाया जागरूकत्वाच्चेति वस्तुतस्तु नदीसंज्ञा सूत्रे यू पदाभावे ह्रस्वनद्यापो नुडितिसूत्रे आव ग्रहणेन आकारान्तस्य नदीसंज्ञाया अभावकल्पनेन नदी वन्धुनीति स्वरापत्तिवारणेनाकारान्तेदोषाभावे ऋकारान्तस्य प्रत्युदाहरणीयत्वेऽपि ऋकारान्तःसम्बुद्धौ

कथं न प्रत्युदाहृम् इति शंकातत्रापिजागर्त्येवेति ॥ तस्मादयमभिप्रायः ननु उक्तरीत्या अदन्तेदोषाभावेनइदुदन्ते इष्टैवयूपदानुवर्तनं व्यर्थमितिपृच्छति यूकिमिति तत्रदोषाभावेऽपिऋकारान्तेदोषइत्याशयेनोत्तरंमात्रेइति नचऋतोङीति सूत्रेङिग्रहणेन न ऋदन्तस्यघिसंज्ञेति वाच्यम् यूपदानुवृत्तौ तात्पर्य्यकल्पने लाघवात् नच तृतीयैकवचने कथं न दोषोदत्तइति वाच्यम् मत्यै वातप्रम्येइत्यादि चतुर्थ्यन्तोदाहरणानुरोधादित्यलम् ॥ ४२ ॥

## घेः किम् ।

ननु घेर्ङिती सूत्रेघिपदाभावेऽपि ह्रस्वपदानुवृत्तौदीर्घस्य तोङीति सूत्रे ङिग्रहणेन ऋकारान्तस्य सख्युरिति निर्देशेन सखिशब्दस्य च गुणाभावसिद्धिःकिम्तेनेति चेन्न ङसिङसोर्विषयेवार्णपरिभाषाया अनित्यायाअप्रवृत्यांतरङ्गत्वाद्‌ यणिनिर्देशस्य व्यत्येति विकृतनिर्देशस्यचोपपत्तौ चतुर्थ्यैकवचने सख्ये इत्यत्रगुणस्यदुर्वारत्वादिति रहस्यम् ॥ ४३ ॥

## ङिति किम ।

ननु घेर्ङितीति सूत्रे ङिद्‌ग्रहणंव्यर्थमिति चेन्नहरिभ्यामित्यत्रगुणापत्तेः नच जसिचेतिनियमात् को दोष इति वाच्यम् अजादव ङितिगुस्णतर्हि जस्येवेतिनियमेन दोषसत्वात् पतय इत्याद्यर्थं जसीत्यस्य चरितार्थत्वाच्च नचहरिरितिप्रथमैकवचनेदोषसत्वाद् हरिभ्यपर्यन्तानुधावनं निर्युक्तिकमितिवाच्यम् सुपिचेत्यत्र आपिचेतिन्यासेन दोषाभावसम्भवेनासाधारणफलाभावात् इति तत्वम् ॥ ४४ ॥

ननु ङिति ईति तद्धितेवेकारस्य लोपसम्भवात् घिसंज्ञकेकारस्यगुणःसुप्येव तत्साहचर्यादुकारस्यापि गुणःसुप्येव सुपीत्यस्यानुवृतिवृथेति शंकतेसुपिकिम् साहचर्यस्यानित्यत्वेनेदन्तेफलाभावेऽपिउदन्तेदोष इत्याशयेनाहपट्वीति तत्वम् ॥ ४५ ॥

## प्रथम हल् किम् ।

ननुहलङ्यादि सूत्रे प्रथमहल्ग्रहणं व्यर्थमिति चेन्न राजेत्यादौ सुलोपानापत्तेः नच तत्र संयोगान्तलोप इतिवाच्यम् तस्यासिद्धत्वात् न लोपः प्रातिपदिकांतस्य इति न लोपानापत्तेः नच नङिसम्बुद्धयोरिति सूत्रेसम्बुद्धि ग्रहणेन न लोपे विभक्तिस्थानिकसंयोगान्तलोपो नासिद्धः अन्यथा हे राजन् इत्यादौसंयोगान्तलोपस्यासिद्धत्वाल्लोपाप्राप्तौ तद्वैयर्थ्यंस्यष्टमेवेति वाच्यम् अत्र दोषाभावेऽपिशक् इत्यादौ शक्स् इतिस्थिते संयोगान्तलोपापवादस्य संयोगादिलोपापत्तावनिष्टापत्तेरिति नच सखेत्यत्रैवदोषो राजापर्यानुधावनं व्यर्थमितिवाच्यम् द्वयोरपिनिरस नीयत्वादितिदिक् । ४६ ॥

## अनङ्णिद्वदिति ।

ननु सखिशब्दे ग्रहणवताप्रातिपदिकेनेति परिभाषयातदन्तविधिनिषेधे सखिरूपांगनिमित्तकवि भक्तावेवतस्य प्राप्तिः कथंसुसखिशब्देऽनङादिः नच प्रत्ययविधायके एवोक्त परिभाषाप्रवृतिरिति वाच्यम् नान्तादसंख्यादेरित्यादौ प्रवृतिदर्शनेन प्रत्ययनिमितकेऽपि प्रवृत्तेरिति चेन्नप्रत्ययाधिकारपठितेष्वेव प्रत्ययविधिविषयकेषुउक्तपरिभाषाप्रवृत्तेः तदाह अनङ्णिद्व द्भावयोराङ्गत्वादिति तयोरांगत्वमङ्गाधिकारीयत्वं नतु प्रत्ययाधिकारपठितत्वं तेन तदन्तविधौतयोःसिद्धिरितितत्वम् ॥ ४७ ॥

## सुसखिना ।

सुसखि शब्दस्य घिसंज्ञायाम् आङो नादेशेतत्सिद्धिरिति ननुस्व घटितसमुदायेस्वभेदाभावेन सुसखिशब्दे सखिभेदाभावान्न तस्यघित्वमिति चेन्न स्वांगसमुदायेन स्वाङ्गमितिभाष्येणवैयाकरणैस्तादृशसमुदाये स्वभेदाङ्गीकारादित्याहसमुदायस्येत्यादि ॥ अत्रसख्य

वयवभिन्नौयाविदुतौ तदन्तयोः घिसंज्ञेति पक्षेतु नघिसंज्ञा ॥ वस्तुत स्तुपूर्वमतमेवयुक्तमितिदिक् ॥ ४८ ॥

परमसखा ।

ननु गौणमुख्यन्यायेन सौअनङ् औजसादौणिद्वद्भावोदुर्लभ इति चेन्न पदकार्ये एव तन्न्यायप्रवृत्तौप्रकृते प्रवृत्त्यभावेनोभयोः सिद्ध त्वादित्याशयेनाह गौणत्वेप्येत्यादीति पदकार्यत्वं चस्त्रीत्वानिमितक त्वेसतिविभक्त्यनिमितकत्वमिति ॥ ४६ ॥

अतिसखिः ।

सखीमतिक्रान्त इतिविग्रहे समासे प्रातिपदिकसंज्ञायां सुपो- लुकि गोस्त्रियोरितिह्रस्वे सौरुत्वेविसर्गेततसाधु नचात्रराजाहःसखि- भ्य इतिटच् स्यादितिवाच्यम् प्रातिपदिकग्रहणपरिभाषाया अनित्य- त्वेनाप्रवृतौ सखिशब्दत्वाभावेनटचोऽप्राप्तेः नचानङ्दुर्वारइतिवा- च्यम् लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तस्यैवग्रहणेनास्य सखि- शब्दस्य लाक्षणिकत्वादिति ॥ ५० ॥

प्रियत्रीणाम् ।

आमिसर्वनाम्न इति साहचर्याद्द गौणमुख्यन्यायाद्वात्रेस्त्रय इत्यस्यगौणेऽप्रवृतिरित्यभिप्रायेणप्रियत्रीणां सूत्रान्तरसाहचर्यस्यकु- त्राप्यदर्शनाद्दपदकार्यत्वाभावेनवात्तन्न्यायाप्रवृतेःत्रयादेशो प्रियत्रयाण- मिति अत्रपरमतमेवयुक्तमिति ॥ ५१ ॥

द्विपर्यन्तानांकिमिति ।

युस्मदस्मदोः शेषेलोपेनकिमःकादेशेन चादोषादिष्टिर्व्यर्थेति- चेन्न भवानित्यत्र त्यदादीनामइत्यात्वापत्तेः नच भवानितिमहाभाष्य प्रयोगेण पूर्वविप्रतिषेधेनानुमितत: सकृतगतिन्यायाद्द अकाराभावेन न

तत्रदोषइतिवाच्यम् तत्रदोषाभावेऽपिभवन्तीत्यत्रदोषात् अत्रान्यथा ज्ञापनंहेयमितितत्वम् ॥ ५२ ॥

## नद्यन्तात्परत्वान्नुट् ।

बहुश्रेयसी आमितिस्थिते परत्वात् यणंवाधित्वानुट्इति नच तद्विषये नुटोऽपवादत्वमिति परत्वमयुक्तमितिवाच्यम् परत्वादित्य-स्योत्कृष्टत्वादित्यत्र तात्पर्यात् एवं वक्रोक्तिस्तु अत्रापवादत्वात् कुमारीणामित्यत्र एरनेकाचइतियणं परत्वादितिवोधनायेतितत्वम् ॥५३

## उन्न्यौ ।

उन्नीऔइतिस्थिते एरनेकाचइतियणि तत्सिद्धिः ननु असंयोग-पूर्वस्यैवेकारस्ययणविधानात् प्रकृतेइकारस्य संयोगपूर्वत्वात्कथं यणितिचेदतआह धातुनासंयोगस्येति ॥ अयम्भावः पूर्वसूत्रात्धातु पदमनुवर्तते तस्यावृत्यासंयोगेऽपि अन्वय एवञ्च संयोगोधात्ववयव-मात्रकृतोगृह्यते इहतुधातूपसर्ग कृतइति ननिषेधइतिदिक ॥ ५४ ॥

## कथंतर्हिदुर्धिय इति ।

ननु दुर्धियः वृश्चिकभियइत्यादौगति कारकपूर्वकेवर्णान्तस्य सत्वेनकथं न यणितिचेदत आहकथंतर्हीत्यादि अयम्भावः दुरित्यस्य स्थितिक्रियां प्रतिगतित्वेऽपिध्यानंप्रति तदभावात् यतः यत्क्रियायां प्रादीनामन्वयः तत्क्रियानिरूपितैवगतिसंज्ञोपसर्गसंज्ञेतिनियमः एवंवृश्चिकस्यकारकत्वमपिन सम्बन्धसामान्येषष्ठींकृत्वा तदन्तेनस-मासात् मध्यमपदलोपि समासस्वीकाराद्वा नचापादानत्वं कथंनेति-वाच्यम् कारकस्यविवक्षाधीनत्वादितिदिक् ॥ ५५ ॥

## न पुत्रादिग्रहणमिति ।

ननु तृनतृच्प्रत्ययान्तत्वात्सिद्धिः अप्तृन्इतिसूत्रे नप्त्रादिग्रह-णंव्यर्थमत आहनियमार्थमिति तदाकारश्च उणादिनिष्पन्नानां तृनतृच्

प्रत्ययान्तानामुपधादीर्घश्चेत्तर्हि नप्त्रादीनामेवेति तत्फलंतु पितरावित्यादौदीर्घाभावइतिनचोदगातृशब्देपिदीर्घोनस्यादितिवाच्यमभाष्यप्रयोगेणतत्रदीर्घसिद्धेरितिवस्तुतस्तुउदगातृशब्दस्योणादौ व्युत्पादनमप्रामाणिकमिति ॥ ५६ ॥

## ओतोणिदिति ।

नच ओतोणिदिति वार्तिकंसूत्रविरुद्धमितिवाच्यम् गकारस्याविवक्षितत्वेन सूत्रतएव तल्लाभात् अत्र विहितविशेषणमपिबोध्यम् तेनसुद्यौरित्यत्रणिद्वद्भावः विहितविशेषणाच्च हेभानोहेभानवइत्यत्र नणिद्वद्भावः ननु सम्बुद्धौ शाकल्यस्येतिसूत्रारम्भात् न सम्बुद्धौणिद्वद्भावइति चेदितएवारुचेः भानवइत्यस्योपन्यासात् अत्र एङ्ह्रस्वादित्यत्र प्रत्याहाराश्रयणान्नहे भानोइत्यत्रदोषइत्यपि चिन्त्यमिति वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया नात्रणिद्वद्भावइति द्वयमपि असंगतंविहितविशेषणकथनमपीतिदिक् ॥ ५७ ॥

॥ इत्यजन्त पुल्लिङ्गप्रकरणम् ॥



# अजन्त स्त्रीलिंगम् ।

## रमेति ।

नचङ्याप्प्रातिपदिकादिति सूत्रेङीपःपूर्वस्त्वेन ङीवन्तमेव-प्रथम मुदाहरणीयमितिवाच्यम् स्त्रीप्रत्ययेटापः प्राथमिकत्वात् वर्ण-समाम्नाये अपदेनैवतस्यस्मरणाद्वेति ॥ नचैवंरमयतेःपचाद्यचि टाप्न युक्तः घञजपःपुंसीति अजन्तस्य पुंस्त्वादितिवाच्यम् सम्बन्धमनु-वर्तिष्यतेइति भाष्यप्रयोगेणतस्य क्वाचित्कत्वात् इतिशम् ॥ १ ॥

## एङ्ह्रस्वादिति ।

ननु रमासुइतिस्थिते पूर्वं हल्ङ्यादिलोपे ततः प्रत्ययलक्षणेनै वैत्वमितिचेन्न निरवकाशत्वात् पूर्वमेत्वप्रवृतेः नचैत्वे कृतेसदुर्वारइति वाच्यम् आरूपस्यापः तत्रग्रहणादित्याशयेनाह एङ्ह्रस्वादिति ॥ २ ॥

## रमायै ।

रमाङेयाटिवृद्धौ तत्सिद्धिः नचनिरवकाशत्वेनयाटा वृद्धेर्वा-धात् कथंवृद्धिरितिवाच्यम् निरवकाशत्वेन वाधेऽपिउत्सर्गप्राप्तिस-त्वाद् नच आटश्चेतिवृद्धिर्न्न्याय्येति वाच्यम् यदुपदेशप्रयुक्तायस्ये-त्संज्ञा तदनुवन्धत्वं तस्येतिसिद्धान्तात् टकारेत्संज्ञकात्वरूपात्त्वा-भावेन्नतदप्राप्तेरित्याशयेनेह वृद्धिरेचिअग्रेसवर्णदीर्घ इत्युत्तरन्यासः ॥३

## सर्वासाम् ।

सर्वा आम् इतिस्थितेसुटि तत्सिद्धिः नच सर्वनामत्वाभावा-त्कथं सुट् इति वाच्यम् पूर्वान्तवद्भावेनतदतिदेशात् तदाहएकादश-स्येत्यादि ॥ ४ ॥

सर्वस्यामितिसर्वाङिइतिस्थिते ङेरामइति ङेरामादेशेयाट्मपवाद-त्वात् बाधित्वासर्वनाम्नः स्याड्ह्रस्वश्चेतिस्याटिवृद्धौ तत्सिद्धिः नच उभयतआश्रयणे नान्तादिवदिति पूर्वान्तवद्भावपरादिवद्भावयोर्नि षेधे तयोरन्यतरस्यैवातिदेशे आबान्तसर्वनामत्वाभावात् कथंस्या डितिवाच्यम् विरुद्धधर्म्मानयने एवनिषेधप्रवृतेः नच यदागमपरिभा षया स्याड्विशिष्टस्यामत्वान्नुट् दुर्वार इति वाच्यम् सकृद्गतिन्याये मतदभावादिति ॥ ५ ॥

## बहुब्रीहिग्रहणमिति ।

ननु पूर्वया सहितोत्तरेतिमध्यमपदलोपितत्परुषसमासेन नि-ष्पन्न पूर्वोतरशब्दे पाक्षिकसर्वनामसंज्ञा व्यावृत्यर्थं क्रियमाणबहुवी हिग्रहणेनेहसूत्रे लक्षणप्रतिपदोक्त परिभाषानाश्रीयते इत्यवश्यंवाच्यम न्यथादिङ्नामान्यन्तरालेइति विहितसमासस्यैवोक्तपरिभाषयाग्रहणे तद्वैयर्थ्यंस्पष्टमेवेति तथाच योत्तोरासापूर्वोयस्याः तस्यै उत्तरपूर्वायै इत्यत्रपाक्षिकसर्वनाम संज्ञादुर्वारेति चेन्न बहुब्रीहिग्रहणस्य स्पष्टार्थमे वक्तृतत्वेनोक्तपरिभाषाप्रवृत्तेर्दुर्वारतयादोषाभावादितिसर्वमाह दिङ् नामेत्यादिनेति ॥ ६ ॥

## जरसौ ।

जराऔ इतिस्थिते परत्वाद् जरसितस्यसिद्धिः नच पूर्वविप्रति षेधेन औङश्यादेशेकृते संनिपातपरिभाषाया अनित्यत्वात् जरसि जरसीतिरूपंस्यादिति वाच्यम पूर्वविप्रतिषेधे परिभाषाया अनित्य-त्वे च मानाभावेन तादृशरूपस्या प्रामणिकत्वात् नच जसः शीतिर्दी-र्घोच्चारणं मानमितिवाच्यम् वारिणीत्याद्यार्थं तस्यावश्यकत्वादिति बोध्यम् ॥ ७ ॥

नन्वेवमपि जरसादेशे कृतेऽपिस्थानिवद्भावेनावन्तत्वमादाय श्यादेशोदुर्वार एवं तत्तद्विभक्तिषु आङिचापः याडपः ह्रस्वनद्यापः

ङेरामदुर्वारः नचअनल्विधाविति निषेधात्कथमावन्तत्वमिति वाच्यम् स्थान्यवयावलवृत्यलमात्रवृति धर्मघटितातिदिदिक्षितधर्मस्यैवानयने अनल्विधावित्यस्य प्रवृति सत्वेनेह आप्त्वस्यालमात्र वृत्तित्वाभावात् किंचनकेवलम् जरसादेशे एवदोषःकिन्तु नासिकानिशापृतनाशव्दानां क्रमेण नस्निश्पृत् इत्येतेषु आदेशेषु कृतेषु उक्तविधीनां दुर्वारत्वात् इति चेन्नऔङआपइत्यादिषूक्तसूत्रेषु आकारस्यापि प्रश्लेषेणआत्वसमानाधिकरणाप्त्वस्य अलमात्र वृत्तित्वेनानल्विधाविति निषेधेन तादृशावन्त त्वस्यातिदेष्टुमशक्यत्वात् नच ङ्याव्ग्रहणेऽदीर्घइति वर्तिकेन स्थानिवद्भावनिषेधेसिद्धे तत्र तत्र प्रश्लेषोव्यर्थइति वाच्यम् वार्तिकस्य भाष्येप्रत्याख्यानात् नचैवम् हल्ङ्यादि सूत्रेऽपि आ आप्ङीई इति प्रश्लेषेणसिद्धेदीर्घग्रहणं व्यर्थमिति वाच्यम् तस्यापिप्रत्याख्यानात् नचप्रश्लेषेऽपि अतिखट्वायेत्यत्र स्वश्रयमाकारं स्थानिवद्भावेनाप्त्वमादाययाड दुर्वार इति वाच्यम् प्रत्ययग्रहणपरिभाषालब्ध तदादिं विशेष्यकं कृत्वा आप्प्रकारकतदन्तविधौ तत्रैवाङ्गस्यअभेदेनान्वये आवन्तंयत्तदादि अङ्गसंज्ञकं ततःपरस्यङितांयाडित्यर्थेनादोषात तथाहियद्यावन्ततताादि खट्वेति तन्नाङ्गम् यच्चाङ्गम् अतिखट्वइति तन्नावन्ततदादीति नच स्त्री प्रत्ययवोधकपदघटिते तदाद्युपस्थितेर्निषेधेन कथमेवमर्थइति वाच्यम् अनुपसर्जनस्त्री प्रत्ययवोधकपदघटितेवाक्ये एवतत्प्रवृतेः तथाचपरिभाषास्वरूपं स्त्रीप्रत्यये चानुसर्जने न इति संक्षेपः ॥ ७ ॥

## निट्त्सु ।

निशासु इतिस्थिते निशाशव्दस्यनिश् आदेशेव्रश्चेतिषत्वे निष्सुइतिजाते षढोःकःसीति सूत्रस्यासिद्धत्वात् झलांजशोऽन्तेइतिजश्त्वे नषस्यडकारेडःसीति धुट्खिरिचेतिचर्त्वेन धकारस्यतकारे डकारस्यटकारेनिट्त्सु धुडभावेनिट्सु नच चयोद्वितीयइतिद्वितीयः कथंनेति वाच्यम् नादिन्याक्रोशेइति सूत्रस्थोक्त वार्तिकं प्रति चर्त्वस्यासिद्धत्वात्

नपदान्तादितिनिषेधात्ष्टुत्वमपिनेतियेतु एकाचो भष् इति सूत्रेमण्डूकाप्लुतिभिया व्रश्चादि सूत्रेऽपिदादे र्धातोर्घइतिसूत्रात् धातुपदमनुवर्तयन्ति तेषांनयेतु न षत्वम् किन्तु निश्शुइतिस्थितेजश्त्वं श्चुत्वं चर्त्वम् निच्शु छत्वपक्षेनिच्छ्रु अत्र चोकुरितिकुत्वं तुनभवतिजश्त्वस्यैवासिद्धत्वादिति ॥ ८ ॥

त्रिचतुरोरि ति ।

अत्र सूत्रे अङ्गस्येत्यनुवर्तते प्रकरणात्तल्लाभइतियावत् त्रिचतुरितिश्रुतम् तथाच श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवायेपारदौर्बल्यमर्थविप्रकर्षादिति न्यायेन स्त्रियामित्यस्य त्रिचतुर्शब्दयोरेवान्वयस्तथाच स्त्रियांविद्यमानौयौत्रिचतुरशब्दौ तदन्तंयदङ्गम् तदवयवयोर्निदिश्यमानयोतिसृचतसृ आदेशइतिसूत्रार्थः तेनप्रिया त्रयः यस्या साप्रियत्रिः अत्र नतिस्रादेशः प्रियातिस्रः यस्य इतिविग्रहेभवतितिस्रादेशःप्रियतिसाइति अंगेएवान्वयेतुविपरीतापत्ति रित्याहस्त्रियामितित्रि चतुरोर्विशेषणमिति ॥ ९ ॥

अतिस्त्रियै ।

स्त्रियमतिक्रान्ता या तस्यै इति विग्रहनिष्पन्नातिस्त्रिशब्दात्ङे ङितिह्रस्वश्चेति नदीसंज्ञायामाटिवृद्धौइयङादेशे तत्सिद्धिः ननु स्त्रीशब्दभिन्नस्यैवङितिह्रस्वश्चेति नदीत्वं कथमत्र नदीसंज्ञेति नच ह्रस्वेकृते न स्त्रीशब्द इति वाच्यम् एकदेशविकृत न्यायेनतत्वादिति चेन्न उक्त सूत्रे वाक्यद्वयसत्वेनपूर्ववाक्येनप्राप्तसंज्ञानिषेधेऽपिउत्तर वाक्येनप्राप्तायानिषेधेमानाभावात् नचात्रमानाभावः तत्रैवास्त्रीत्यस्यान्वयात् तत्रैवकिंमानमितिवाच्यम् इयङुवङ्स्थानपदसंनियोगशिष्टास्त्रीपदस्यानुवर्तनेन यत्रतस्यान्वयः तत्रैवास्याप्यन्वयस्यन्याय्यत्वादिति तदाह ह्रस्वान्तत्वप्रयुक्तविकल्प इत्यादीति ॥ १० ॥

आरम्भसामर्थ्यादिति।

मनुणपदानुवृत्यैव सिद्धे एकाजुत्तरपदे इत्यत्रणपदंव्यर्थम् नच संनियोगशिष्टत्वात् वापदस्यापि अनुवृत्तिःस्यादिति तन्निवृत्यथ तद्ग्रहणमिति वाच्यम् प्रातिपदिकान्तेति पाक्षिकणत्वसिद्धेऽस्यारम्भादेवतन्निवृतिसिद्धेरिति चेदतआह आरम्भसामर्थ्येत्यादीति ॥ ११

इत्यजन्तस्त्रीलिंगम्

## अथाजन्त नपुँसक लिङ्गम्।

भस्यकिम्।

ननु तत्रतत्र डित्व सामर्थ्यादभस्यापिटेर्लोप इतिकल्पनापेक्षया टेरितिसूत्रस्यैवभाधिकारात् पृथक् पाठोऽस्तुइति शंकते भस्येतिकिम् पञ्चमइत्यत्र डटोमडागमेडित्वस्यातिदेशादत्रापिटि लोपापत्तिरतोभाधिकारे पाठःकल्पना च प्रामाणिकी न दोषायेत्युत्तराशयादाहपञ्चम इति नचमडागमापेक्षया मट् प्रत्ययएवविधेय इति न दोषः तत्र पाठो व्यर्थइति वाच्यम् अत्र डटोविच्छेदेन षट्कतिकतिपयचतुरांथुगिति सूत्रे तदननुवृत्तौ षष्ठइत्याद्यसिद्धयापत्तेः नचतेनापिथट्प्रत्ययएवविधेयइति वाच्यम् तस्मिन्परे पूर्वस्यपदत्वापत्तौ षष्ठइत्यादौ जश्त्वापत्तेः नपदान्तादितिष्टुत्वनिषेधापत्तेश्च नचवतोरिथुगित्यनन्तरं मट्प्रत्ययो विधेयः षट्कतीतिसुत्रे मण्डूकाप्लुतिरपिनेति कोदोषः पञ्चमइत्यत्रेति वाच्यम् विंशतितम इत्यत्रडटः तमडागमेटिलोपस्यतिलोपस्यावापत्तेः नच तेनापि तमट्प्रत्ययएवविधेयइति नोक्तदोषइति वाच्यम् तमट्शब्देइष्टस्यागमानुदात्तत्वस्यानापत्तेः प्रत्ययस्वरेणाद्युदात्तत्वापत्तेश्च नच मट्तमटोः स्थानेमुक् तमुकुइतिन्यासो नात्रदोषः कुत्रापीतिवाच्यम्

मकारे परतः पूर्वस्यपदत्वानापत्तौपञ्चम इत्यत्र न लोपानापत्तेः तस्मा द्भाधिकारेपाठोऽन्थाय्यइतिशम् ॥ १ ॥

## कतरद् ।

कतरसुइतिस्थिते सोरदडादेशेटिलोपेतत् साधुनच अदडादेशे डकारोच्चारणंव्यर्थंपूर्वरूपेणसिद्धेरिति वाच्यम् पूर्वसवर्णदीर्घापत्तेः नचदआदेश एवास्तु आदेःपरस्येति अकारस्यदकारे संयोगान्त लोपे सिद्धमिष्टं शितंवाकृत्वाततसिद्धमितिवाच्यम् हेकतरतइत्यत्र सम्बुद्धि लोपापत्ते रेतदेव बोधयति टे र्लुप्तत्वादित्यादित्यादिना ॥ २ ॥

## माम्भ्याम् ।

अत्र यस्यमांसमहमद्धिमांसभक्षयितामुत्रेतिमनौ मांसइत्यस्य दर्शितत्वेन ततःभ्यामि मांसपृतनेत्यंत्यलोपे पदसंज्ञायांसलोपे परस वर्णेमाम्भ्यामितिमकारघटितं साधुवार्तिकस्यहलन्तमांसादेशविधानेतु नतात्पर्य्यमितिस्पष्टं तद्विदामिति मान्भ्यामिति नकारघटितमसाधु ॥३

## श्रीपाय ।

श्रीपाङे इतिस्थिते ह्रस्वेङेर्यादेशेसुपिचेतिदीर्घे श्रीपायेतिनचात्र भसंज्ञायाम् आतोधातोरित्याकारलोपोदुर्वार इतिवाच्यम् सन्निपात परिभाषयातदप्राप्तेः नच यादेशसन्निपातस्य अकारस्य दीर्घेणैवविधातेकथंलोपेन तद्विघातइति वाच्यम् अकारे मात्राकालिकत्वविशिष्टा त्वसत्वेन दीर्घेणमात्रिकत्वविघातेऽपि अकाररलोपेसन्निपातवि धातस्यस्पष्टत्वादितिदिक् ॥ ४ ॥

## हे वारे ।

वारि सुइतिस्थिते सोर्लुकि गुणेतत्साधु नच सम्बुद्धिपरत्वा भावात्कथंगुणइति वाच्यम् प्रत्ययलक्षणेन तत्सत्वात् नच न लुमते

तिनिषेधइति वाच्यम् तस्यानित्यत्वात तेन हे वारे हे वारिइति रूप द्वयं ननु अनित्यत्वेकिंमानमिति वाच्यम् इकोऽचीतिसुत्रेऽचग्रहणस्यैव मानत्वात् तथाहि तदभावेऽपिभ्यामादौसत्यपिनुमिनलोपः सम्बुद्धिश्च लुकापहृता प्रत्ययलक्षणेन तत्रनुम्वाच्यः प्रत्ययलक्षणं च नलुमते तेनिषेधस्यानित्यत्वं विनादुर्लभमिति व्यर्थमज्ग्रहणंतस्यानित्यत्वं ज्ञापयति तस्मिन्ज्ञापिते सम्बुद्धौप्रत्ययलक्षणेन नुमिन नकारश्रवणापत्तिः न लोपस्तु नङिसम्बुद्धयोरितिनिषिद्धोऽतोऽजग्रहणमितिनचोत्तरार्थमज्ग्रहणमितिवाच्यम् तत्रैवपठितव्येइहपाठस्यज्ञापकत्वेबाधकाभावात् अधिकंभाष्येस्पष्टं तथाहि ॥ इकोऽचि व्यंजनेमाभूदस्तु लोपः स्वरःकथं ॥ स्वरोवैश्रूयमाणेऽपि लुप्तेकिं न भविष्यति । रायात्वंतिसृभावश्च व्यवधानान्नुमाअपि ॥ नुड्वाच्यउत्तरार्थंतु इहकिंञ्चित् त्रपोइति ॥ ५ ॥

## प्रद्युनेति।

प्रद्युनेत्यत्र पुंवद्भावस्तु न यदिगन्तं प्रद्युइतितस्यभाषितपुंस्कत्वाभावः यच्चभाषितपुंस्कम् प्रद्योइति तस्येगन्तत्वाभावः इति नचैकदेशविकृतन्यायेन इगन्तस्यापिभाषितपुंस्कत्वाद् पुंवद्भावोदुर्वारइति वाच्यम् उपजीव्यविरोधेनह्रस्वनिवृत्तेरशक्यत्येनतदभावादितिदिक् ॥६

## प्रराणाम् ।

प्ररि आमिनुटि नित्यत्वादात्वेणत्वेप्रराणाम् नच सन्निपातपरिभाषया कथमात्वमिति वाच्यम् नामीतिसूत्रेण नामविषयेतदप्राप्तेरितिमाधवमतम् वस्तुस्तु नामीति कर्तव्येऽप्रवृतावपि अत्रप्रवृतौ बाधकाभावान्नात्वमिति प्ररीणामित्येव युक्तमित्याशयेनाह वस्तुतइत्यादीति संक्षेपः ॥ ७ ॥

॥ इति नपुंसकलिंगम् ॥

# अथ हलन्त पुल्लिंगम्।

## उपदेशेकिमिति।

ननुदादेर्धातोर्घ इति सूत्रे उपदेशे इतिव्यर्थम् नच अधोगित्यत्रघत्वार्थं तदावश्यकमितिवाच्यम् एकाचोवश् इति सूत्रेणगर्धवित्यत्र भष्भावार्थमनुवृत्तधातुपदे व्यधिकरणान्वयस्यावश्यकत्वेनात्रापि तथान्वये धात्ववयवस्यदादेर्हस्यघइत्यर्थेन तत्सिध्देरिति चेन्न दामलिहशब्दात क्यचि ततः क्विपि अलोपयलोपयोः निष्पन्नदामलिहशब्देऽपिहस्यघत्वापत्तेः सतिउपदेशेनघत्वमुद्देश्यप्रातिपदिकानांनोपदेशइतिभाष्येण दामलिहशब्दस्योपदेशत्वाभावात् नचोपदेशइतिनिष्प्रमाणमितिवाच्यम् दादिपदावृत्तौएकस्यदादिपदस्य उपदेश इत्यर्थपरत्वात् ॥ अत्रधुगित्यादौ घत्वस्यासिद्धत्वात्ढत्वं न शंक्यम् घत्वस्य ढत्वापवादत्वादिति दिक ॥ १ ॥

## एकाचोधातोरिति।

ननु सम्भवतिसामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यतया धात्ववयवस्यएकाच इति व्याख्यानमसंगतमिति चेन्नगर्धवित्यस्यएकाच्धातुत्वाभावेनभष्भावानापत्तेः व्यधिकरणान्वयस्यैव युक्तत्वाद् तदाहएकाचधातोरितिननु तथान्वयेधुगित्यत्रभष्भावो नस्यात् दुघ्इत्यस्य धातुत्वेन तदवयवत्वाभावाततदवयवस्यदुइत्यस्यझषन्तत्वाभावात् उघित्यस्यधात्ववयवझषन्तैकाच्त्वेऽपि तदवयववशोऽभावादित्याह व्यपदेशिवदिति। तथाचदुघित्यस्यैवझषन्तैकाच्त्वं धात्ववयवत्वं चेति तदवयवस्य दकारस्य धकारइतिदिक् ॥ २ ॥

## णिजन्तातद्विजिति।

वहश्चेति सूत्रे छन्दसीत्यनुवर्तनात् लोकेविस्ववाहशब्दस्या साधुत्वमभिप्रेत्याहणिजन्ताद्विजिति परन्तुअत्रणिचः स्थानिवद्भावेन तद्व्यवधानात् ऊठ् न किन्तु लोके साधुत्वमात्रमिति ॥ वस्तुतस्तु प्रष्ठौहआगतमितिभाष्यविग्रहात् लोकेऽपिणिचः साधुत्वमिति तदाह पक्षेतु इति शेखरकारः भाष्येवाहधातोः तद्रूपकल्पनेन तदुपपत्तौ लोकेएवन्त प्रयोगकल्पने मानाभाव इति कश्चित् ॥ ३ ॥

## अनड्वानिति।

अनडुहसौ इति स्थिते चतुरनडुहोरिति आमागमे ततोनुमि यणि सुलोपेसंयोगान्तलोपेतत्साधुनचतक्रकौण्डिन्यन्यायेननुमः आमोऽपवादत्वात् पूर्वं नुमि ततः आम्नस्यात् एवंसम्बुद्धौ अमिनुम् नस्यादिति वाच्यम् सावनडुहइत्यत्र आच्छी नद्योर्नुमित्यतः आत् पदमनुवर्त्यअवर्णात् परस्य नुमोविधानेन तक्रन्यायविषयाभावात् तदाहआदित्यधिकारादिति । ननु तक्रन्यायेन सुलोपंबाधित्वानुमि सुलोपो न स्यादिति चेन्नसौ तक्रन्यायविषयाभावात् इतिदिक ॥४॥

## पदान्तेकिमिति।

ननु वसुस्रंसु इति सूत्रे पदान्तग्रहणाभावेऽपिझलीत्यस्यानुवृत्तौ अनड्वाहौ इत्यादौ न दोषःपदान्त इति व्यर्थमिति चेन्नस्रस्तंध्वस्तमित्यादौ दत्वापत्तेरिति ॥ ५ ॥

## णत्वंद्वित्वमिति।

चतुर आमिनुटिणत्वेद्वित्वे चतुर्ण्णामिति ननुद्वित्वविषयेपूर्वत्रासिद्धंनप्रवर्ततेइत्यर्थकेन पूर्वत्रासिद्धीयमद्वित्व इति वचनेनद्वित्वस्यासिद्धत्वाभावेन परत्वात् द्वित्वे ततोणत्वं युक्तं नत्र वर्णग्रहणे

नेयंपरिभाषाप्रवर्तते इति वाच्यम् वाक्क् इतिभाष्योदाहरणे पूर्वत्र क-श्रवणानापंचेरिति चेन्न द्वित्वभिन्ने पूर्वत्रकर्तव्येपरमसिद्धंनेत्यर्थस्य सत्वेनप्रकृतेतद्विषयाभावात् अतोणत्वंद्वित्वमितियुक्तमेवेतिदिक्।६

गौणत्वेतुनुड्नेष्यते।

अयम्भावः षड्चतुर्भ्यइति बहुवचननिर्देशेन चतुरादिशब्दानां स्वप्रवृत्तिनिमितविशिष्टस्वार्थनिष्ठमुख्यविशेष्यताप्रयोजकोपस्थितिज-नकचतुरादिशब्दपरत्वं तथा च प्रियचतुरादिघटकचतुरादि शब्दाना-मुपसर्जनत्वान्ननुडिति दिक् ॥ ७ ॥

षत्वंकमल्षु।

कमलशब्दात् कमलाशब्दात् वाणिजिक्विपिनिष्पन्न कमल्श-ब्दात् सुपिषत्वेतत् साधु ननु कौलुप्तं नस्थानिवदितिणिलोपस्य स्था-निवद्भावनिषेधात् पञ्चमी समासपक्षे टिलोपस्य स्थानिवद्भावात् तेन व्यवधाने कथं षत्वमिति चेन्न पूर्वत्रासिद्धीये न स्थानिवदिति स्था निवद्भावनिषेधात् तदाह॥ ८ ॥

अकच्सहितस्यापीति।

ननु किमः क इति सूत्रे इमइत्येवास्तु तथाच इमः अ आदेशे-सिद्धम् क इति नच अलोऽन्त्यस्येति अन्त्यस्यस्यादिति वाच्यम् नानर्थक इतिनिषेधात् त्यदादीनाम इति सिद्धे आरम्भसामर्थ्याच्च नच तिम् स्तिमादौदोष इति वाच्यम् त्यदादिपदानुवृत्तौ दोषाभावात् नच द्विपर्यन्तानामेव त्यादादित्वात्किम् शब्दे दोषः स्यादिति वाच्यम् द्विशब्दप्राक्तत् पाठसत्वात् एवं च किम्सर्वनाम बहुस्य इत्यत्रकिम् ग्रहणं न कर्तव्यमित्यपरमनुकूलं नच इमौइत्यादावपिदोष इति वाच्यम् अनुवृतिपरिभाषया तन्निषेधादिति चेदतआहअकच्सहित-स्येति अयम्भावः किम् शब्दादकचिकिम् शब्दस्य तन्मध्यपतितस्न्या-

यात् किमशब्दत्वात् अनेकाल्त्वात् सर्वस्य कादेशे क इति रूपमन्यथाकक इति अतः किमः क इतिन्यासः॥ ९॥

## नित्यत्वात् ङेस्मैइति।

इदङे इतिस्थिते अनादेशस्मायादेशयोः प्रसङ्गे परत्वादनादेशे स्मायादेशोन स्यात् सकृत्गतिन्यायादत आहनित्यत्वात् ङे स्माइति अयम्भावः कृताकृतप्रसङ्गित्वात् पूर्वस्मैततोहलिलोपइति लोपेसिद्धम अस्मैइति नच अनादेशस्यापि कृताकृतप्रसङ्गेनं नित्यत्वमितिवाच्यम् लक्ष्यानुरोधात् बाधकाबाधितस्यैव कृताकृत प्रसङ्गस्यग्रहणादिति॥ १०॥

## अशवचनमिति।

ननु इदमऽन्वादेश इति आश्विधनंव्यर्थं त्यदाद्यत्वे हलिलोप इति लोपेसिद्धंरूपमाभ्यामित्यादि नचोपसर्जनार्थमश्वचनमिति वाच्यम् एतदस्त्रतसोरित्युत्तरसूत्र साहचर्य्येणास्यापि उपसर्जनेऽप्रवृत्तेरत आहअश्वचनंसाकच्कार्थमिति तेन इदमशब्दादकचि साकच्कस्यसर्वादेशार्थं सूत्र मितिदिक्॥ ११॥

## ॥ राज्ञ इति ॥

राजन् अस इतिस्थिते भसंज्ञायाम् अलोपेश्चुत्वे राज्ञ इत्निनु पञ्चमी समासपक्षे अलोपस्यस्थानिवद्भावात तेनव्यवधाने कथंश्चुत्वमिति चेन्न पूर्वत्रासिद्धीयेन स्थानिवदिति तन्निषेधात् ननु प्रत्ययसापेक्षभासंज्ञासापेक्षत्वेन अलोपस्यबहिरङ्गत्वं घटकनिमित कत्वेनश्चुत्वस्यान्तरङ्गत्वमितिश्चुत्वे अलोपस्यासिद्धत्वात् कथम् श्चुत्वमिति चेदत आह यथोद्देशपक्ष इत्यादि न च कार्यकालपक्षेदोष इतिवाच्यम् लक्ष्यानुरोधात् यथोद्देशपक्षस्यैवाश्रयणात् इतिदिक।१२॥

## ॥ वृत्रघ्न इति ॥

वृत्रहन् अस् इतिस्थिते भसंज्ञायाम् अल्लोपेहो हन्तेरिति कुत्वे तत्सिद्धम्। नचाचः परस्मिन्निति स्थानिवद्भावेन अकारव्यवधाने कथं कुत्वमितिवाच्यम्। नकारेपरे कुत्वविधानसामर्थ्यात् स्थानिवद्भावाभावात्। ननु पञ्चमीसमासपक्षेऽल्लोपस्य स्थानिवद्भावात् 'एकाजुत्तरपदे इतिणत्वंकुतोन। न च पूर्वत्रासिद्धीये नस्थानिवत्इति स्थानिवद्भावनिषेधइतिवाच्यम्। अस्यसंयोगादिलोपत्नत्वणत्वेष्विति निषेधादिति चेन्न। हन्तेरत्पूर्वस्येति सूत्रेऽत्पूर्वस्येति योगोविभज्यते- तेनात्पूर्वस्यैव हन्तेःणत्वविधानेप्रकृते अत्पूर्वत्वाभावात्णत्वाप्रवृत्तेः। नचानन्तरस्येति न्यायात् हन्तेरित्यस्यैव निषेध इति वाच्यम्। योगविभागसामर्थ्येनानन्तर' स्येति न्यायाप्रवृत्तेरितिदिक् ॥ १३ ॥

## ॥ यत्तुवृत्रघ्न इति ॥

यत्तुवृत्रघ्न इत्यत्र भसंज्ञायामल्लोपे उत्तरपदमनचकं स्थानिवद्भावश्चाल्विधित्वान्नेह इतिएकाजुत्तरपदत्वाभावात् प्रातिपादिकान्त नुमविभक्तिषुचेतिवैकल्पिकंणत्वं माधवेनोक्तंतत् भाष्यवर्तिकविरुद्धम् अयम्भावः भाष्ये कुव्यवायेहादेशेषुणत्व प्रतिषेधो वक्तव्य इतिवा- र्तिकेनणत्वमात्रस्य निषेधः किञ्चवार्तिकप्रत्याख्यानेऽपि अत्पूर्व- स्येत्यत्रानन्तरस्येति न्यायाप्रवृत्तौणत्वमात्रस्य निषेधो लभ्यते एवञ्च वृत्रघ्न इत्यादौ माधवोक्तंणत्वं सर्वथाऽसंगतमितितदीय ग्रन्थो- ऽप्यसंगतः। अचः परस्मिन्नितिस्थानिवद्भावप्रवृत्तेः कुमतिचेति नित्य- णत्वप्रवृत्तेश्चेतिदिक् ॥

ननु कुव्यवाये इतिवार्तिकसत्वे वहुवृत्रहाणीत्यत्रणत्वं भवति तत् प्रत्याख्यानेऽत्पूर्वत्वाभावात् नणत्वप्राप्तिरितिफलभेदः। नचा न्तरंगेणत्वे वहिरंगदीर्घस्यासिद्धत्वाण्णत्वप्रवृत्तौ न फलभेद इतिवा- च्यम्। प्राघानीत्यत्रवार्तिकसत्वेणत्वाप्रवृत्तेः तत्प्रत्याख्याने वहिरंगदी- र्घस्या सिद्धत्वाण्णत्वप्रवृत्तेः फलभेदस्यदुर्वारत्वात्। न च लक्ष्या-

नुरोधाद्दश्च यथोद्देशपक्षाश्रयणेदीर्घस्यासिद्धत्वाभावात् प्रत्याख्या-नेणत्वाप्रवृत्तौ न फलभेद इतिवाच्यम् । प्रघनाधन इत्यत्र फलभेद-स्य दुर्वारत्वादितिचेन्न । अत्पूर्वस्येति सूत्रस्य कवर्गाभाववद्धन्ति-परत्वेन कुत्रापिफलभेदाभावात् । वस्तु तस्तु वार्तिकारम्भ एव ज्या-यान् प्रत्याख्यानस्य गुरुतरत्वात् इतिदिक् ॥ १४ ॥

## ॥ मघवान् ॥

मघवान् सु इतिस्थितेतृआदेशेनुमागमे संयोगान्तलोपे सर्व-नामस्थानेचासम्बुद्धावितिदीर्घेसुलोपे ततसाधु ॥ ननु दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वात् नान्तत्वाभावेन दीर्घः कथम् न च क्क-चिदन्यदेवेत्यर्थकवहुलग्रहणेनसंयोगान्तलोपोनासिद्ध इतिवाच्यम् न लोपस्यापिदुर्वारत्वादितिचेन्न आरम्भप्रत्याख्यानयोः फलैक्याय वहुलग्रहणेनदीर्घे कर्तव्ये एव संयोगान्तलोपस्यसिद्धत्वबोधनात् तथाहि महेः कनि अवुगगामे हस्यघत्वेमघवा धनवाचिमघशव्दात् मतुपि अत्वन्तदीर्घे मघवान् इतिरूपद्वयसिद्धौ केशाद व इति सूत्रे कैयटे मघवावहुलमिति प्रत्याख्यातम् इतिसूत्र प्रत्याख्यानेमघवान् तत् सत्वेदीर्घाभावेन लोपे वा फलभेदः स्पष्ट एवेत्यतो दीर्घे स सिद्ध इति ॥ अतएव हीवजक्षितिनिः शंकोमरवेषु मघवानसौ । इतिभट्टि-प्रयोगेदीर्घनिर्देशः संगच्छते इति ॥

ननु अर्वणस्तृ मघोनश्च न शिष्यं छान्दसंहिततमतुव्वन्यो विधा नाद्यछन्दस्पुभयदर्शनादितिवार्तिकेनमघवानित्यस्यलोकेऽसाधु-त्वात् कथं मघवानसाविति चेदत आह अन्तोदात्तनिवति अयम्भा-वः मघवन् शब्दोद्विधाव्युत्पन्नः मघशब्दात्छन्दसीवनिपो चेतिवनि-प्रत्ययान्त एकः कनूप्रत्ययान्तश्चापरः मघवा वहुलमित्यत्र चद्वयो-रनुकरणं तथाच वनिवन्तस्यमध्योदात्तस्य छान्दसत्वेऽपिकन् प्रत्य-यान्तान्तोदात्तस्तुलोकेऽपि साधुरेवेति वस्तुतस्तु संकोचे माना-भावेन उभयविषयकस्यानुकरणेमानाभावेन लोके प्रयोग असाधुरेव-

मघवान सावित्यस्यत् न असवः यस्येति अनसु तस्मिन् रावणे मृते मघवानिः शंको हविर्जक्षिति इतितदर्थइतिदिक् ॥ १५ ॥

॥ यून इति ॥

युवनशब्दाच्छसि भसंज्ञायां वकारस्य संप्रसारणे पूर्व रूपे दीर्घेतत् साधु। ननयकारस्यापिसंप्रसारणस्यादिति चेन्नन संप्रसारणे संप्रसारण मितिनिषेधात्। न च यकार व कारायोः युग पत संप्रसारणेप्राप्ते पूर्वं यस्यैवसंप्रेसारणे न सं प्रसारणे संप्रसारमितिव्यर्थमिति वाच्यम्। एतन्निषेधसामर्थ्यात् परस्ययणः संप्रसारणे मिति ज्ञापनेना दोषात्। तदाह अतएवेत्यादि ॥ इति ॥ १६ ॥

॥ अनञः किमिति ॥

ननु 'अनञः किं''अनर्वा इतिमयुक्तम् ''असावितिपर्युदासा देव तत्रादोषादितिचेन्न। यञ्व शब्दशद्दृशोऽनर्वन्शब्दो व्यावर्त्य इत्यत्र तात्पर्यात्। वस्तु-स्तु-अथर्व दर्वन्शब्दस्यनिर्दिश्यमानस्यादेशविधाना दागमसमभि व्याहारेआगमविशिष्टस्यैवार्थ वत्वेनकेवलार्वन्शब्दस्यानर्थकत्वान्नदोषइतिप्रश्नाशयः। निर्दिश्यमानेऽर्थवन्निवेशेमानाभावेनानर्थकस्याप्यादेशे दोष इत्युत्तराशयइतिदिक् ॥ १७ ॥

॥ पन्था इति ॥

पथिन् शब्दात् सौनकारस्याकारान्तादेशे इतोऽत्सर्वनामस्थाने इति इकारस्थानेऽकारे दीर्घेथोन्थ इति न्थादेशे विसर्गेतत्साधु। ननुतपरसूत्रेणषण्णां दीर्घाकाराणामात्पदेन ग्रहणेनकरस्थानेऽनुनासिक आकारस्यादिति चेदत आह आ आदिति। न चाकार द्वयविधाने सर्वादेश इतिवाच्यम्। विशेष्यविशेषण भावेनान्वयात्। भाष्येतुलाघवादनुनासिकविधाने तस्योच्चारणकर्तव्ये तदनुच्चारणात् शुद्धस्यैव विधानमित्युक्तमितिदिक् ॥ १८ ॥

## सुपथीति ।

पथिन्शब्दप्रसंगादाह स्त्रियांसुपथीति । ननुनस्त्रियामिति कप्स्यादितिचेन्न । यचोरनाकाविति सूत्रे सुपथीतिभाष्यप्रयोगादत्र-समासान्ताप्रवृतेः ॥ १९ ॥

## सुपन्थानीति ।

ननु इतोत्सर्वनामस्थान इति सूत्रस्थाने इतोऽत्सुटीति न्यासो युक्तइति चेन्न नपुंसके औङ- श्यादेशेसुपथीत्यत्रादेशापत्तेःशसः श्या-देशे सुपन्थानीत्यत्रानापतेश्चेति तदाहशौसपन्थानीति ॥ २० ॥

## शतानीति ।

ननु शतशब्दात् जसः श्यादेशेनुमागमेयदागमपरिभाषया शत नइत्यस्य संख्यावाचकत्वं स्वतश्च नान्तत्वमिति षट् संज्ञादुर्वारेति चेन्नसन्निपातपरिभाषाविरोधात् तदाह शतानीत्यादीति ननु विंश-त्याद्याः सदैकत्वे इत्यनुशासनात् शतमित्येवसाधुनतुशतानीति चेन्न शतञ्चशतञ्च शतञ्चेति एकशेषेण तदुपपत्तेरितिदिक् ॥ २१ ॥

## अष्टौ ।

ननु अष्टानामिति सिद्ध्यर्थम् अष्टनआविभक्ताविति सूत्रेहली त्यस्यापकर्षो भाष्येउक्तः अन्यथा अष्टन् आमितिस्थिते नित्यत्वा-दात्वे नडुनापत्तेः तथाच अष्टावित्यादौअत्वंनस्यात् हल्परत्वाभावा-दितिचेन्न अष्टभ्य इतिनिर्दिशतासूत्रकृता कृताकारान्ताष्टन् शब्दस्यै वसूत्रेऽनुकरणमितिबोध्यते तथाचजस्शसोरत्वंविना सूत्रवैयर्थ्यमिति जस्शसोरात्वानुमानेन अष्टावित्यादौ दोषाभावात् ननु अष्टन आत्व-स्यनित्यतया अष्टभ्य इत्युक्ति र्न युक्तेति चेन्न अष्टनोदीर्घादिति सूत्रे-दीर्घग्रहणेन अष्टन आत्वस्यपाक्षिकत्वबोधनेन अष्टभ्य इति निर्देशस्य युक्तत्वादन्यथा अष्टभिरित्यादौ स्वरव्यावृत्यर्थं क्रियमाणं दीर्घग्रहणं व्यर्थमेवेतिदिक् ॥ २२ ॥

## प्रियाष्टनः।

प्रियाष्टन्शस् इतिस्थिते भसंज्ञायामलोपे प्रियाष्ट्नइति ननुष्टुत्वं कथमत्रनेतिचेन्नअन्तरङ्गपरिभाषया अलोपस्यासिद्धत्वेन तेनव्यवधाने ष्टुत्वाप्रवृत्तेः नच यथोद्देशपक्षेतृपाद्यांसान प्रवर्ततइति वाच्यम् कार्यकालपक्षेप्रवृतिसत्वात किञ्चपञ्चमीसमासपक्षे अचः परस्मिन्निति स्थानिवद्भावेन तद्व्यवधाने तदप्रवृतेश्च नच पूर्वत्रासिद्धीयेनस्थानिवदितिस्थानिवद्भावनिषेधः स्यादिति वाच्यम् संयोगादिलोपलत्वंणत्वेषु तदप्रवृतेरिति सङ्क्षेपः ॥ २३ ॥

## युजेरितिधातुपाठेति।

ननु युजेरसमासे इति सूत्रेयुजेरितिइकानिर्देशः एवञ्चयुज् समाधौयुजिर्योगे इति उभयत्रनुम्स्यादत आहयुजेरित्यादीति तेन युजिरयोगेइत्यत्रैवनुम् यदिद्वयोर्ग्रहणमिष्टंस्यात तदायुजोऽसमासेइति वदेत्इकानिर्देशे गौरवादितिदिक् ॥ २४ ॥

## ननुत्वंस्त्रीत्यादीति।

ननुत्वअम् इतिस्थिते परमपिपूर्वरूपंबाधित्वाघ्यकनिमित्तकत्वेनान्तरङ्गत्वात् टाप्स्यादितिचेन्नअलिङ्गेयुष्मदस्मदीतिभाष्येणयुष्मदस्मद्शब्दयोः स्त्रीत्वावाचकतया टापोऽप्राप्तेः ॥ ननु उक्तभाष्यस्य विशेष्यवाचकपदसभिव्याहारंविनायुष्मदस्मद्शब्दात् किञ्चिल्लिङ्गं न प्रतीयतेइत्यत्रैव तात्पर्यमिति प्रकृते स्त्रीपदसमभिव्याहारे स्त्रीत्वप्रतीतेः टाप्दुर्वारः अतएव शिशीनुम्लुग्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशाइति वार्तिकं संगच्छतेअन्यथा शिशीनुमादीनामप्राप्त्यातदसङ्गतमेवस्यादितिचेदत आह यद्वेति अयम्भावः शेषेलोपइत्यत्र लोपग्रहणात्मपर्यन्ताच्छेषस्य अद इत्यस्यलोपइत्यर्थसत्वेन् अन्तरङ्गे अतो गुणेकृते अद्शब्दस्य लोपेअदन्तप्रातिपदिकाभावेन नटाविति तदाह ननुत्वंस्त्री अहंस्त्रीत्यादीति॥ २५ ॥

## मपर्यन्तस्यकिम ।

ननुमपर्यन्तस्येति सूत्रंव्यर्थं नचयुवकाम् आवकामित्यादौअक-च्विशिष्टस्यादेशापत्तिरितिवाच्यम् ओकार सकार भकारादौ सुपि सर्वनाम्नः टेः प्रागकच्अन्यत्रसुवन्तस्येतिनियमात् युवाम् आवामिति-सिद्ध्युत्तरमकचोविधानेनादोषात् नच त्वयामयेत्यादौ सर्वस्यत्वमा-देशेऽन्त्यस्ययादेशेऽनिष्टरूपापत्तिरिति वाच्यम् अच्येइतिन्यासेनान्त्य स्य एकारेअयादेशे तत्सिद्धेरिति चेन्न युवकाभ्याम् आवकाभ्यामि-त्यादौसाकच्कस्यादेशापत्तेः हलन्तादेशपक्षे मादेशस्य सर्वादेशत्वं च नस्यादितिदिक् ॥ २६ ॥

## यूयम् ।

ननु यूयमित्यादौ शेषेलोपइत्यन्त्यलोपपक्षे स्थानिवद्भावेना-मोजस्त्वात् शीभावः कथंनेतिचेन्न अङ्गकार्येपुनर्नाङ्गकार्यमिति शीभा-वाप्राप्तेः यदि तुइयम्भाष्ये लक्ष्यसिद्ध्येनक्वापि आश्रितेत्युच्यतेतदा ङेप्रथमयोरम इत्यत्र मकारान्तप्रश्लेषेण शीभावाभावोवोध्यः वस्तु-तस्तु शेषविभक्तिभूतामादियुष्मदादिसन्निपातेन जातस्यलोपस्य तद्विघातकस्यादेशनिमित्तत्वंनेतिसन्निपातपरिभाषयैव श्याद्यभावइति दिक् ॥ २७ ॥

## भ्यसोभ्यमिति ।

अत्रभ्यम् अभ्यम् वापदच्छेदः ननुशेषेलोपइति सूत्रे शेषग्रहण-सामर्थ्यातटिलोपपक्षआश्रितःसामआकमइत्यत्रसकारोच्चारणेन अन्त्य-लोपपक्षश्चेति तथा चटिलोपेकथंभ्यमितिच्छेदे कार्य्यनिर्वाहइतिचेन्न पक्षद्वयस्य व्यवस्थिततत्वात् तदाह आद्यः शेषेलोपइत्यादीति ॥ २८ ॥

## भाविनः सुडिति।

युष्मद आम्इतिस्थिते आमि सास्त्वारोपात् सामआकमिति

आकमादेशे शेषेलोपेदीर्घे युष्माकमिति।

ननु युष्मदआमितिस्थिते शेषेलोप इत्यन्त्यलोपे सुटः प्राप्तिः अन्त्यलोपश्च आकमादेशोत्तरम् आकमादेशश्चसुट् प्रवृत्युत्तरम् सुट् प्रवृतिश्चअन्त्यलोपोत्तरमिति चक्रकापत्या सामोऽभवात् ससुट्क-निर्देशोऽव्यर्थः सूत्रंचासङ्गतमितिचेदत आहभाविनइति अयम्भावः आमिसाम्त्वस्य आहार्य्यारोपात् साम्त्वज्ञानसत्वेन आकमादेशवि-धानेन सूत्रसार्थक्यम् ससुट्कनिर्देशाच्च आकमिस्थानिवद्भावेन नाम त्वं नापिसाम्त्वंतेन नयुष्माकमित्यत्रसुट्नापि अतित्वाकमित्यत्रनुट्-इति दिक् ॥ २६ ॥

समस्यमाने इति।

ननु युवावौद्विवचने त्वमावेकवचने इति सूत्रद्वये द्विवचनैक-वचनशब्दयोर्द्वित्वैकत्ववाचिनोरित्यादिरीत्यार्थोवर्णितः तद्व्याख्या-नेकिम् फलमतआहसमस्यमानइत्यादीतिअयम्भावः तथाव्याख्याना-भावेद्विवचनैकवचनपदेन विभक्त्योर्ग्रहणे त्वांमां वातिक्रान्ताविति विग्रहनिष्पन्नअतियुष्मद् औ अत्यस्मद औ इतिस्थिते युवावौस्यातां त्वमौ च न स्यातामिति तथा व्याख्यानमितिदिक ॥ ३० ॥

स्थग्रहणादिति।

ननु षष्ठीचतुर्थीत्यादिसूत्रे स्थग्रहणाभावेऽपि सर्वस्यपदस्ये-त्यादिपदाधिकारादेव विभक्त्यन्तस्यादेशो भविष्यति स्थग्रहणंव्यर्थ मतआह स्थग्रहणादिति अयम्भाव इह स्थापदमहान्यर्थकं तेन षष्ठ्या द्यजहतोर्युष्मदस्मद्शब्दयोरादेश इति व्याख्यानं फलितम् तथाच इति युष्मत् पुत्रोव्रवीति इत्यादौ नादेशः नच स्थाधातोरहान्यर्थो-ऽप्रसिद्ध इति वाच्यम् समयेतिष्ठ सुग्रीवेत्यादौ समयंमाहासीरित्यादि व्याख्यानेतथा प्रसिद्धेरितिदिक् ॥ ३१ ॥

## प्रतीचः ।

प्रत्यच् शसितिस्थिते अनुबन्धलोपे भ संज्ञायां अच इति अकारलोपे चावितिदीर्घे तत्साधु ननुप्रति अच् इति स्थिते अकारलोपेऽपि अचः परस्मिन्नितिस्थानिवद्भावेन अकारमादाय यण् स्यादिति चेन्न नपदान्तेति पदान्तविधौ स्थानिवद्भावनिषेधात् नच अन्तरङ्गत्वाल्लोपात् पूर्वमेवकुतो न यणितिवाच्यम् अकृतव्यूहपरिभाषया पूर्वमपि यणोऽप्रवृत्तेः तद् ाहेहलोपस्यविषयइत्यादीति ॥ ३२ ॥

## अमुमुयङ् ।

अद्रि अच् सु इति स्थिते यणि अदसोऽसेरिति दकारद्वयस्य मत्वे अकाररेफयोरुत्वे अमुमुयच् सौ इति जाते नुमागमेसंयोगान्तलोपेकुत्वेन ङकारे सुलोपे तत्सिद्धम् । यदितु अन्त्यबाधेऽन्त्यसदेशस्येति अन्त्यदकारस्यमत्वं ततः परस्य उत्वमित्युच्यते तदाअदमुयङ् इतिसाधु वस्तुतस्तु अदसोऽसेरितिसूत्रे असेरित्यस्य यत्र सकारस्थाने अ तत्रैवमुत्वमित्यर्थः तथाच त्यदाद्यत्वविषये एव एतत् प्रवृतिर्नप्रकृते त्यदाद्यत्वाभावात एवञ्च अदद्र्‌यङ् इत्येवरूपमिति । रूपत्रयञ्चवार्तिककारसम्मतम् उक्तञ्चतेनैव । अदसोऽद्रेः पृथक्मुत्वं केचिदिच्छन्ति लत्ववदित्यादि अत्रामुद्र्यङिति रूपवर्णनं तु न कस्यापिसम्मतमितिस्पष्टंमनोरमायां प्रकृतप्रयोगव्याख्याने एवेतिदिक्

## वप्रत्ययेकिमिति ।

ननु विष्वग्देवयोश्चेतिसूत्रे व प्रत्ययग्रहणं व्यर्थं नच अञ्चधातु परतआदेशविधाने विष्वगञ्चनमित्यत्रापि आदेशः स्यादिति वाच्यम् उत्तरपदाधिकारसत्वेन सामानाधिकरण्येनान्वये अञ्चरूपोत्तरपदपरत्वाभावेनादोषादितिचेन्न व प्रत्ययग्रहणसामर्थ्यात् धातुग्रहणेऽपि तदादिविधिज्ञापनेन अञ्चत्यादौ उत्तरपदे इत्यर्थसम्भवेनत

विष्वगञ्चनमित्यत्र दोषसत्वात् तत्फलंतुअयस्कारइत्यादौ सत्व-सिद्धिरिति तदाह व प्रत्ययग्रहणमित्यादि ॥ ३४ ॥

## सुवृट्।

सूपपदक व्रश्चेःक्विपि अनुवन्धलोपे वेर्लोपेग्रहिज्येतिसंप्रसारणेप्रातिपदिकसंज्ञायांसौ नकारजादनस्त्वीरेत्यभियुक्तोक्तेः श्चुत्वस्यासिद्धत्वात् स्कोरिति सलोपेततः व्रश्चेतिषत्वेजश्त्वचर्त्वेसुवृड् सुवृट् अत्रव्रश्चेतिषत्वं स्कोरिति सलोपइति मूलयोजनं स्कोरितिसलोपःततः षत्वमितिरीत्यावोध्यम् अन्येतुपूर्वत्रासिद्धमित्यस्यप्रवृतावप्रवृत्तौवाफलाविशेषात् परस्यान्यत्रवलवत्वदर्शनात् षत्वं सलोपइतियथाश्रुतमेव साधुइतिवदन्ति ॥ ३५ ॥

## परंनित्यंचेति।

धीमत् सुइतिस्थिते अत्वसन्तस्येतिदीर्घेनुमि सुलोपेसंयोगान्तलोपे धीमान्इति ननुपरत्वात्नित्यत्वाच्च दीर्घंवाधित्वानुमेवस्यात् तथाच दीर्घोदुर्लभइतिचेदतंआह परंनित्यंचेत्यादि वस्तुतस्तुःहउपधापदं पूर्वमात्रोपलक्षणं तेनपूर्वंनुमिकृते नदोषइतिशम् ॥ ३६ ॥

## गोमान्।

गोमत्शब्दात् क्यजन्तादाचारक्विवन्तात् वाकर्तृक्विपिनिष्पन्न गोमत्शब्दात् प्रातिपदिकसंज्ञायां सौअत्वसन्तेतिदीर्घे उगिदचामितिनुमि सुलोपेसंयोगान्तलोपेगोमानिति ननुगोमदित्यस्यधातुत्वात् आधातुपर्युदासात्कथंनुम्इतिचेदत्रोच्यते तत्राधातुग्रहणं भूतपूर्वाधातुग्रहणार्थं तेननामधातौनुम्सत्वे नकिमपिवाधकमिति नचधातोर्नुम् व्यावृत्यर्थमधातुग्रहणमितिवाच्यम् धातोश्चेदुगित्कार्यम् तर्हिनलोपिनोऽञ्चतेरेवेतिनियमे धातोर्नुम्व्यावृतिसिद्धेः नचकथमञ्चति

ग्रहणं व्यर्थं येन नियमार्थं भवेदितिवाच्यम् उगित्वादेवनुमसिद्धौ अञ्चतिग्रहणनैरर्थ्ये बाधकाभावात् तस्मातनामधातौ नुम्भवत्येवेतिदिक् ॥ ३७ ॥

## दीधीवेव्योरिति ।

ननु दीधीवेवीधात्वो रभ्यस्तसंज्ञाविधानमयुक्तं तयोरात्मनेपदित्वेन शतृप्रत्ययासम्भवेन नुमोऽप्राप्तेरिति चेन्नतयोः छान्दसत्वेन परस्मैपदित्वेन शतृप्रत्ययसम्भवात् तदाह दीधीवेव्योर्ङित्वेऽपीत्यादीति ॥ ३८ ॥

## ताद्दक इति ।

ताद्दृशशब्दात् सौक्किन्प्रत्ययस्येति कुत्वस्यासिद्धत्वात् व्रश्चेतिषत्वे तस्यजश्त्वेनडकारेः तस्यकुत्वेनगकारेपक्षेचर्त्वेन ककारेताद्दृक ताद्दृग्इतिरूपद्वयमइति दीक्षितमतम् अत्रशब्दकौस्तुभे कैयट हरदत्तादीनान्तु अयम्भावःक्विन् प्रत्ययस्यकुरित्यत्र प्रत्ययग्रहणस्य ब्रहुर्व्रीहिफलम तच्चक्विन्कुर्यतइति न्यासेनद्वष्टपदाध्याहारेणान्यथासिद्धम् एवंच प्रत्ययग्रहणं वीप्सागर्भितबहुर्व्रीहिसमासलाभार्थं तेनक्विन्नन्तप्रयोगमात्रे कुत्वप्रवृतिःफलिता तथा च षत्वस्यापिअपवादत्वात् बाधकंकुत्वमिति तदाहषत्वापवादत्वादिति वस्तुतस्तुप्रत्ययग्रहणस्यबहुर्व्रीहिमात्रफलकता भाष्येउक्तानतुवीप्सा तथाच दधृषादिशब्दे चरितार्थकुत्वस्यषत्वापवादत्वं नयुक्तमितिदिक ॥ ३९ ॥

## दिधक् ।

दहधातोः सनिद्वित्वेअभ्यासस्येत्वे दिदहसइति जातेक्विपितस्यलोपे अतोलोपइति अकारलोपेप्रातिपदिकत्वात् सौसंयोगान्तस्यलोपइति सलोपेसुलोपे दादेर्धातोर्घइतिहस्य घत्वेभष्भावे जश्त्वचर्त्वे दिधक्इत्यादि वस्तुतस्तु अत्रघत्वंदुर्लभम् दिदहइत्यस्यदह इत्यु-

त्तरखण्डस्यवाउपदेशाभावात् तस्मात्होढ़ इतिढत्वमेवेतिवोध्यम् ४०

सेदुषइति।

सेद्वस् असितिस्थितेभसंज्ञायां संप्रसारणे पूर्व्वरूपेषत्वेसेदु-षइति नचान्तरङ्गत्वात् वस्वेकाज्घसामिति इड्दुर्वारइतिवाच्यम् अकृतव्यूहपरिभाषयाइटोऽप्रवृत्तेरिति नचषत्वतुकोरिति पूर्व्वरूपस्या-सिद्धत्वात्कथंषत्वमितिवाच्यम् पदान्तपदाद्योरेवतत्प्रवृत्तेरितिदिक् ४१

सुहिन्सौ।

ननु सुहिन्सावित्यत्र सान्तमहतइति दीर्घःस्यादिति चेन्नमह-त्शब्दसाहचर्यात् प्रातिपदिकस्यैवसान्तस्यग्रहणादिति ॥ ४२ ॥

पुमान्।

पुंस्सौइतिस्थिते पुंसोऽसुङिति असुङादेशेङलोपेउकारो-च्चारणार्थत्वे नुमागमेदीर्घेसुलोपेसंयोगान्तलोपे तत्साधुननु नुमर्थमु-कारस्येत्संज्ञैवयुक्ता उच्चारणार्थोक्तिरसंगततिचेन्नवहुपुन्सीत्यत्रङी-वर्थकृतेनोदित्वेनै वनुम्सिद्धेस्तदाह उकारउच्चारणार्थइत्यादीति ।४३

इति हलन्तपुल्लिङ्ग प्रकारणम् ॥

# अथ हलन्तस्त्रीलिङ्गप्रकरणम्।

गिरौ।

ननुगिरावित्यत्रअचिविभाषेति लत्वंस्यादितिचेन्नधातो रुच्य-मानंकार्यंतत्प्रत्ययेभवतीतिपरिभाषयाधातुविहितेऽचिलत्वविधाना-दिति ॥ ४४ ॥

चतस्रः।

चतुर् असितिस्थितेचतस्रादेशे तत्साधु ननुस्थानिवद्भावेन चतुर्शब्दत्वात् चतुरनडुहोरिति आम्स्यादितिचेन्न आमंपरत्वात्वाधित्वाजातेचतस्रादेशे सकृद्गतिन्यायेनाऽमोऽप्राप्तेरिति ॥ ४५ ॥

सर्वावदिति।

सर्वाशब्दवदित्यर्थः तेनेसर्वनाम्नोवृतिमात्रे इतिनपुंवद्भावःशब्दपरत्वेन सर्वनामत्वाभावादतएव एततदोरित्यादौ नत्यदाद्यत्वमिति ॥ ४६ ॥

अप्सु।

अप्सु इतिस्थिते स्वादिष्वितिपदसंज्ञायांपस्य जश्त्वेखरिचेति चर्त्वेतत्साधु चर्त्वस्यासिद्धत्वात्नचयोद्वितीयइतिपस्यफकारइति ४७

इति स्त्रीलिङ्गप्रकरणम्।

# अथ हलन्तनपुंसकलिङ्गम्।

स्वनडुत् इति।

स्वनडुह् सुइतिस्थिते सोर्लुकिवसुस्त्रंसुइति दत्वेचर्त्वेतत्सिद्धम् नचअत्रपदाधिकारसत्वेन अनडुहमात्रस्य पदत्वाभावात्कथम् दत्वमितिवाच्यम्पदाधिकारे तदन्तविधिसत्वेन दत्वस्यसुलभत्वादिति ४८

विमलदिवीति।

विमलदिव्औइतिस्थिते औङः श्यादेशे विमलदिवीति सिद्धम् ननु राजपरुष इत्यादौ पूर्वपदे प्रत्ययलक्षणेन पदत्वात् न लोपवत् दिवित्युत्तरपदस्यापि प्रत्ययलक्षणेन पदत्वात् दिवउदिति उत्वं

कथं नेति चेन्न । उत्तरपदस्य पदत्वप्रयुक्ते कार्ये कर्तव्ये प्रत्ययलक्षणं नेत्यर्थकेन उत्तरपदत्वे इति वार्तिकेन प्रत्ययलक्षणनिषेधात्पदत्वाभावेन उत्वाप्रवृत्तेः नचोत्तरपदस्य पदत्वाभावे दधिसेचावित्यत्र सेच्इत्यस्यापिपदत्वाभावेन सातपदाद्योरित्यस्याप्रवृत्या धातुघटकसकारस्यषत्वंस्यादिति वाच्यम् अपदादिविधावित्युक्तेः तेन पदादिविधिभिन्ने विधावेव प्रत्ययलक्षणनिषेधः पदादिविधौ प्रत्ययलक्षणं भवत्येवेति न षत्व मत्रैव चस्यकुत्वेप्रत्ययलक्षणनिषेधात्पदत्वाभावश्च सिद्ध्यतीति तत् सर्वमाह इहान्तर्वर्त्तनीमित्यादीतिदिक ॥ ४९

## अझलन्तत्वान्नुमिति।

नपुंसकस्य झलचइत्यत्र नपुंसकस्य न यम इति न्यासस्तु न युक्तः वारीत्यादौ नुमभावेऽपि मांसीत्यादौनुमापत्तेः यथाश्रुतन्यासेतु अच्पदावृत्या अचः परस्यैवझलोग्रहणेन न दोषइति न्यासोदुष्टः तत्सूचयन्नाह अझलन्तत्वादिति ॥ ५० ॥

## नलुमतेति कादेशोनेति।

ननु किमित्यत्रनलुमतेतिकादेशोनेति लेखो न युक्तः तेनकादेशविधानाभावादिति चेन्न न लुमतेतिनिषेधात् कादेशोनेत्यत्र तत् तात्पर्यादिति ॥ ५१ ॥

## इह अहः अहोभ्यामिति।

ननु अहः अहोभ्यमित्यादौ रत्वरुत्वयोरसिध्यत्वात् नलोपः कथंनेतिचेन्न अहन्नितिसूत्रमावर्त्यप्रथमेन नलोपाभावंनिपात्यद्वितीयेन रत्वंविधेयमितिप्रकृतेनलोपाप्रसक्तेः नच आवृत्तौमानाभावइति वाच्यम् रूपरात्रेति वार्तिकस्यैवमानत्वादन्यथा न लोपेजाते अवशिष्टस्य

हकारोत्तराकारस्यरत्वे रुत्वे वा विशेषाभावेन तद्द्वैयर्थ्यंस्पष्टमेवेति तदाहेह अहः अहोभ्यामित्यादि ॥ नच नलोपेकृतेरत्वेरुत्वे वाविशेषाभावेनोभय विधानंव्यर्थमितितत्सामर्थ्यात् नलोपवाधइतिवाच्यम् सम्बुद्धौन लोपनिषेधेनोभयविधानचारितार्थ्यादिति सङ्क्षेपः ॥ ५२

## दीर्घाहानिदाघइति।

दीर्घाहन्सइतिस्थिते अहन्नित्यत्रतदन्तविधिसत्वेन तदन्तस्यापिरुत्वविधानात् नस्यरुत्वेततः परत्वादुपधादीर्घे ततः सुलोपेरोर्यत्वेयलोपे तत् साधुपूर्वंदीर्घस्तु न अकृतव्यूहपरिभाषायाः प्रवृत्तेः दीर्घात्पूर्वंसुलोपोऽपिन परत्वात् दीर्घप्रवृत्तेः तदाह इह हल्ङ्यादिलोपइत्यादि ॥ ५३ ॥

## दीर्घाह्ना।

दीर्घाहन् आइतिजाते भासंज्ञायामलोपेतत्साधु नचएकाजुत्तरपदेणइति णत्वंस्यादिति वाच्यम् (क्षुम्नादिषुच) इतिनिषेधात् इति ॥

## असृक् इति।

नञ् पूर्वकसृज्धातोः क्विपितस्यसर्वापहारे प्रातिपदिकत्वात् सौतस्यलुकिक्विन्प्रत्ययस्येति पदान्ते कुत्वेचर्त्वेतत्साधु।

ननु चोः कुरितिकुत्वंस्यादिति चेन्न कुत्वापवादेव्रश्चेतिषत्वेतस्य जश्त्वेन डकारेततः कुत्वमित्यत्र तात्पर्य्यादिति ॥

ननुक्विन प्रत्ययाभावात् कथं कुत्वमिति चेन्न तत्रप्रत्ययग्रहणस्यातद्गुणवहुव्रीहिलाभार्थत्वेन असृज् शब्देऽपिक्विन्प्रत्ययस्येत्यस्यप्राप्तिसत्वात् नच विश्वसृड् इत्यादावपि कुत्वंस्यादिति वाच्यम् रज्जुसृड्भ्यामितिभाष्यप्रयोगेणानव्ययपूर्वपदेकुत्वाभाववोधनात् नच उपयट् काम्यतीति काम्यच्चेतिसूत्रस्थे प्रयोगेऽपि कुत्वंस्यादिति वा-

च्यम् नञितरपूर्वपदे कुत्वाभावबोधनेनोभयत्र कार्यनिर्वाहात् तदाह असृजः पदान्तइत्यादीति वस्तुतस्तु रज्जुसृड्भ्यामित्यादि भाष्यप्रयोगेण सृजियज्योरपिषत्वंपदान्ते कुत्वापवाद एवेति षत्वंसिद्धमेव नचसृक्ऋत्विक्शब्दयोरपिषत्वंस्यादितिवाच्यम् सूत्रेतयोः कृतकुत्वनिर्देशेन पदान्ते कुत्वनिपातनात् नच असृक्इत्यस्यासिद्धिः कथमितिवाच्यम् अस्धातोरौणादिक ऋज् प्रत्ययेचोःकुरिति कुत्वेतत्सिद्धेःतदाहयद्वेत्यादीति दिक् ॥

## नरजानामिति

ऊर्जीत्यत्रनुमोनस्य चुत्वं न रेफेणचवर्गस्य व्यवधानादिति सूचनार्थमाह नरजानामिति ॥

## वेभिदि।

वेभिद्यतेः क्विपिअलोपयलोपयोः प्रातिपदिकत्वेजसिश्यादेशे तत्साधु नन्वत्रनपुंसकस्येतिनुम्स्यादिति चेन्न अचःपरस्मिन्नितिस्थानिवद्भावात् नचाजन्तलक्षणएवनुमस्तु इतिवाच्यम् स्वविधौस्थानिवद्भावनिषेधात् अतएवभवतेरइति संगच्छतेऽन्यथावादेशनापत्तिरिति।

## स्वाम्पि।

स्वप्जसिश्यादेशे अप्तृन्नितिदीर्घे नुमितत्साधु ननुपरत्वान्नित्यत्वान्नुमिअप्शब्दत्वाभावाद्दीर्घोनस्यादितिचेन्न दीर्घस्यप्रतिपदोक्तत्वात् वस्तुतस्तु प्रतिपदोक्तस्य निरवकाशस्यैवबलवत्वप्रयोजकत्वेन दीर्घस्यापइत्यादौचरितार्थत्वात् प्रतिपदोक्तत्वं न बलवत्वप्रयोजकमिति परत्वादिनानुमिदीर्घाप्रवृत्तेः स्वम्पीत्येवसाधुइति ॥

इति नपुन्सकप्रकरणम्।

विहितविशेषणान्नेहेति ।

अत्युच्चैस् औइत्यत्र सुप्लुकमाशंक्याहविहितेत्यादीति ननुप्रयोजमंसर्वनामाव्ययसंज्ञायामिति वार्तिकानुरोधात् अत्रतदन्तविधिसत्वेनलुग्दुर्वारइति चेन्न उपर्जनस्याव्ययत्वाभावात् तदाह अव्ययसंज्ञायामित्यादीति दिक् ॥

इत्यव्ययप्रकरणम् ।

## * अथ स्त्रीप्रत्ययप्रकरणम् *

अजाद्युक्तिरिति

ननु अजादिगणेअदन्तशब्दपाठोव्यर्थः अदन्तत्वात्सिद्धेरिति चेन्नजातिवाचकवयोवाचकेषु प्राप्तङीप्ङीप्बाधानार्थंतदुक्तेः तेन अजाबालेत्यादौटाप्सिद्धिस्तदाह अजाद्युक्तिरिति ॥ १ ॥

अजादिभिरिति

ननु प्रत्ययविधौ परश्चेत्यस्याधिकारसत्वेन तद्योगेअन्यारादिति पञ्चम्याविधानेन षष्ठ्याअसम्भवात् अजादीनांवाच्यं यत्स्त्रीत्वमित्यर्थासम्भवः नचतस्यपञ्चम्यन्तत्वेऽत्रप्रातिपदिकाधिकारसत्वेन तदन्त विधौपञ्चानामजानामिति विग्रहनिष्पन्नद्विगुसमासे सिद्धपञ्चाजशब्दात् प्राप्तद्विगोरितिङीपं बाधित्वाटाप्स्यादितिवाच्यम् प्रत्ययविधौ तदन्तविधिनिषेधेनादोषादिति चेन्नअनुपसर्जनाधिकारेण अमहत्पूर्वग्रहणेन च स्त्रीप्रत्ये तदन्तविधिज्ञापनेनोक्तस्थलेदोषसत्वात् षष्ठीसत्वेतु अत्रसमासार्थसमाहारनिष्ठस्त्रीत्वसत्वेनाजशब्दवाच्यत्वाभावेनादोषस्तदाह अत्रेत्यादि नचापर्याप्त्या समासार्थनिष्ठस्त्रीत्वस्याजशब्दवाच्येऽपिसत्वात् टाप्दुर्वारइतिवाच्यम् षष्ठ्याश्रयणात् पर्याप्त्यैवस्त्रीत्वस्यग्रहणात् नचाजादीत्यस्यषष्ठ्यन्तत्वेऽपि प्रा-

तिपदिकस्यविशेष्यत्वात् तदन्तविधौदोषः तदन्तस्थइतिवाच्यम् समानविभक्तिकविशेषणे एवतदन्तविधिस्वीकारादितिदिक् ॥ २ ॥

## प्रत्यक्पुष्पा

सदच्काण्डइत्यत्र सत्प्राक्काण्डेति प्राचीनपठितवार्तिकस्यायुक्तत्वं ध्वनयन्नाहप्रत्यक्पुष्पेति तेननोदाहरणद्वयवैयर्थ्यम्। ३।

## शूद्राचामहदिति

अत्र जातिरित्यावर्तते तथा शूद्रशब्दः टापंलभतेजातिश्चेद्वाच्यामहत्पूर्वः टापंनलभतेजातिश्चेद्वाच्येति वार्तिकार्थः ननुपूर्वत्रविधायकेऽर्थेजातिसम्बन्धोव्यर्थइति चेन्नशूद्रस्यस्त्रीत्यर्थे पुंयोगङीषं वाधित्वाटावापत्तेस्तत्सत्वे जातिवाचकत्वाभावान्नदोषः किञ्चसमाहारेपञ्चशूद्रीत्यत्रापिटावापत्तिरिति तत्सम्बन्धइतिदिक् ॥ ४ ॥

ननु शूद्राचेतिवार्तिकेऽमहत्पूर्वग्रहणंव्यर्थम् इतिचेन्न ॥ आभीरजातिवाचकमहाशूद्रशब्दात् टावापत्तेरयम्भावः नृपाच्छूद्रायामुत्पन्ना उग्रजातिकन्या तत्रब्राह्मणादुत्पन्नाभीरीसातुमहाशूद्रीत्यभिधीयते आभीरीतुमहाशूद्रीतिकोशात् अत्रानुलोमसङ्कराणांमातृजातिवृतित्वात्तत्र मातृजातिमारोप्यशूद्रशब्दप्रयोगइति तत्रटाब्व्यावृत्त्यर्थं तद्ग्रहणम् नचप्रत्ययविधौतदन्तविधिनिषेधान्नदोषइतिवाच्यम् तत्सामर्थ्यात् स्त्रीप्रत्ययेतदन्तविधि ज्ञापनादितिसङ्क्षेपः ॥ ५ ॥

नन्वत्रोत्तरकोटौजातिसम्बन्धोव्यर्थइतिचेन्नमहतीशूद्रेतिविग्रहे समासेप्रातिपदिकसंज्ञायां सुपोलुकिनिष्पन्नमहाशूद्रशब्दात्टाब्भावायतदावश्यकत्वा दन्यथाजातेरस्त्रीतिङीषस्यादिति नचपूर्वंटापःजातत्वेन समासोत्तरमपितत्सत्वेनादन्तत्वाभावात्कथं ङीवितिवाच्यम् जात्यन्तरनिवृत्तिपरत्वे पूर्वंस्त्रीत्वाविवक्षया जातिमात्रविवक्षयामहच्छब्दस्यशूद्रशब्देन मृगक्षीरकुक्कुटाण्डवत्समासे ततःस्त्रीत्ववि-

वक्षायांङीषः प्राप्तिसत्वात् नचजातिवाचकशूद्रशब्दस्यस्त्रियामविद्य-मानत्वात् कथंङीपितिवाच्यम् स्त्रियामित्यस्यतदन्तेन प्रातिपदिकेन-सहैवान्वयात् नचशूद्रशब्देलिङ्गाविवक्षायां नपुंसकत्वापत्तिस्तथाच-परवल्लिङ्गमितिनपुंसकत्वापत्तिरितिवाच्यम् अवयवात्समुदायाच्चस्त्री-त्वविवक्षायामवयवस्य स्त्रीलिङ्गत्वेन तस्यैवविवक्षितत्वादितिदिक् ६

## उखा स्रत

नन्वत्रोगित्वादुगितश्चेतिङीप स्यादितिचेदतआह उगिदचा-मितिअयम्भावः तत्राच्ग्रहणसामर्थ्यात् नलोप्यञ्चतीतरधातोरुगित्-कार्य्यंनेतिदिक् ॥ ७ ॥

## सामन्यग्रहणमिति

ननु वनोरचेत्यत्र वन्पदेन तदनुबन्धकपरिभाषया वनिपएव-ग्रहणंस्यान्नक्वनिप्ङ्वनिपोरपीत्याह सामन्यग्रहणमिति अयम्भावः वनोरचेत्यत्रानुबन्धानुच्चारणेन तदनुबन्धकग्रहणेतिपरिभाषायाविष-याभावादिति ॥ ८ ॥

## पञ्चेति

ननु पञ्चन्इतिनान्तस्य षट्संज्ञासत्वात् ऋन्नेभ्यइतिङीपः नषट् इतिनिषेधेऽपि नलोपेकृतेतस्यादन्तत्वात् टाप्स्यात् नच षट्-त्वात्निषेधः स्यादितिवाच्यम् नान्तस्यषट्त्वेऽपि नलोपेऽदन्तस्य-षट्त्वाभावात् इतिचेन्नषट्संज्ञांप्रति नलोपस्सुप्स्वरेति नलोपस्या-सिद्धत्वात्षट्त्वसत्वेन निषेधप्रवृत्तेः सुलभत्वात् तदाह पञ्चेत्यत्र-नलोपेकृते इत्यादीति ॥ वस्तुतस्तुसंज्ञायां दण्डिदत्तौदत्तदण्डिनावि-ति भाष्योदाहरणेन नलोपस्सुप्स्वरेत्यत्र संज्ञापदेनघिसंज्ञायाएवग्रह-णमितिषट्संज्ञाम् प्रतिनलोपस्यासिद्धत्वाभावात्षट्त्वाभावात्टाप्-दुर्वारः तस्मात् यथोद्देशपक्षेपञ्चन्नितिनान्तस्य षट्संज्ञायाःसत्वेन

नलोपेजातेऽपिस्थानिवद्भावेन पञ्चेत्यत्रषट्त्वातिदेशात् निषेधप्रवृत्तौ नटावित्येवसमाधानं युक्तमिति नच नान्तत्वसमानाधिकरणसंख्यावाचकत्वरूपषट्त्वस्य अल्मात्रवृत्तित्वात् तन्निमितकविधेरल्विधित्वात् अनल्विधावितिस्थानिवद्भावनिषेधइतिवाच्यम संकेतसम्बन्धेन षट्पदवत्वरूप षट्त्वस्याल् वृतित्वाभावादितिदिक् ॥ ९ ॥

## पक्षेडाप्निषेधाविति

ननु अनुउपधालोपिन इतिसूत्रेऽन्यतरस्यांग्रहणं नकार्य्यम् डाप्ङीप्निषेधङीपां तुल्यविषयतायाःसत्वेन विधानसामर्थ्येन चत्रयाणांपर्य्यायेणसिद्धेरितिचेन्न अनुपधालोपिनि सुपर्वेत्यादौ डापोनिषेधस्य च चारितार्थ्येनोपधालोपस्थलेङीपडाप्निषेधयोःनिषेधापत्तेः ङीपोऽनवकाशत्वादितिसूचयन्नाह पक्षेडावित्यादि ॥ १० ॥

## कात्किम् नन्दना

ननुप्रत्ययस्थात् कादितिसूत्रेकात्ग्रहणं व्यर्थमतआहनन्दनेति प्रत्ययस्थनकारात् पूर्वस्याकारस्येत्वं माभूदिति तद्ग्रहणमिति ॥ नच ल्युःकर्तरिपुंसीत्यमरात्ल्युप्रत्ययान्तस्यपुंस्त्वात् स्त्रीत्ववाचकत्वाभावात् टापोऽप्राप्तेः कथंप्रत्युदाहरणमिदमितिवाच्यम् युवोरनाकावितिसूत्रेनन्दनेति भाष्योदाहरणे स्त्रीत्वबोधनात् अमरस्यप्रामादिकत्वाच्चेतिदिक् ॥ ११ ॥

## पूर्वस्यकिमिति।

ननुप्रत्ययस्थादितिसूत्रे पूर्वस्येतिव्यर्थम् दिग्वाचकशब्दयोगे पञ्चमीविधानेन पूर्वस्यैवाध्याहारादिति चेन्न तस्मादित्युत्तरस्येति परस्यैवोपस्थितेः तथाच कटुकेत्यत्रककाराकारस्येत्वंस्यादिति सविकेत्यत्रदोषसत्वादेतदनुधावनमशोकवनिकान्यायेन मनोरमायांतस्यैव प्रत्युदाहृतत्वाच्च नच कटुकेत्यत्रान्तरङ्गत्वाद् दीर्घइत्वंनस्यादितिवा-

च्यम् आपत्वेनापवादत्वाच्च त्यस्यैवप्रवृतेरितिदिक् ।

शैषिकेकपीति ।

अयम्भावः अभाषितपुंस्काच्चेत्यत्र विहितविशेषणात् अविद्यामानाखट्वा यस्याइतिविग्रहे शैषिककवभावेसमासे प्रातिपदिकसंज्ञायाम् सुपोलुकिगोस्त्रियोरितिह्रस्वेततः टापिअखट्वाइतिसिद्धम् ततोऽज्ञातार्थे केकेऽणइतिह्रस्वे टापोभाषितपुंस्कविहितत्वेन अभाषितपुंस्काच्चेत्यस्याप्राप्तौ प्रत्ययस्थादितिनित्येत्वेएकमेवरूपम् अविद्यमानाखट्वा यस्याइतिविग्रहे एवशैषिकेकपितु समासेप्रातिपदिकसंज्ञायामसुपोलुकि अखट्वाकइतिजाते आगमसमभिव्याहारे आगमविशिशिष्टस्यैवार्थवत्वमिति अखट्वाइत्यस्यार्थवत्वाभावेन प्रातिपदिकत्वाभावात्गोस्त्रियोरित्यस्याप्रवृतौनकपीति केऽणइत्यस्यनिषेधेआपोऽन्यतरस्यामिति ह्रस्वे ह्रस्वाकारस्याभाषित पुंस्कविहितातस्थानिकत्वेन अभाषित पुंस्काच्चेति वैकल्पिकमित्वम्भवत्येव विहितविशेषणाभावे शैषिककवभावे पूर्वोक्तोदाहरणेऽपि वैकल्पिकमेवस्यात् अतोविहित विशेषणम् तेनशैषिकेकपि अनेन पाक्षिकमित्वम् तदभावे उत्सर्गेण नित्यमिति तदाह शैषिकेकपीत्यादि ॥ १३ ॥

उपसर्जनत्वातनेहेति ।

ननुअनुपसर्जनाधिकारोव्यर्थः अतआहउपसर्जनत्वादिति अयम्भावः तदभावे बहुकुरुचरेत्यस्यस्त्रियां विद्यमानत्वेनटिदन्तत्वेनचङीबापत्तिः तत्सत्वेतुटप्रत्ययस्योपसर्जनत्वेनानुपसर्जनटितोऽभवात्नङीप् ननुप्रत्ययविधौ तदन्तविधिनिषेधसत्वेन स्त्रियां विद्यमानंयत्टिद्रूपमदन्तं प्रातिपदिकंततः ङीप्विधानेनबहुकुरुचरेत्यस्यटिद्रूपत्वाभावान्नदोष; नचटिद्ग्रहणंव्यर्थ मितिवाच्यम् टप्रत्ययटकारोच्चारणेन अवयवानुबन्धस्यसमुदायोपकारकत्वमाश्रित्य-

तच्चारितार्थ्यात् ततश्चानुपसर्जनाधिकारोऽव्यर्थः इति चेदतआहअयमेवेत्यादि अयम्भावः अयमेवानुपसर्जनाधिकारः स्त्रीप्रत्ययेतदन्तविधिं ज्ञापयतितेन टिदन्तेत्यर्थसत्वे वहुकुरुचरेत्यत्रङीवापत्तिरतः तदधिकार इति नचैवमपि अनुपसर्जनादित्यस्यतदन्तविशेषणत्वेनतदन्तस्यानुपसर्जनत्वात्ङीवं दुर्वारःपुनरपिसव्यर्थ इति वाच्यम् यावनाविनेतिन्यायन स्वस्यगृह्यमाणविशेषणत्वकल्पनात् नचैवमपि स्त्रियामित्यस्यगृह्यमाणस्यैव विशेषणत्वस्वीकारेटितः स्त्रियामविद्यमानत्वात् न तत्रङीपः प्राप्तिरितिपुनः सव्यर्थ इति वाच्यम् तेनैवस्त्रियामित्यस्य तदन्तविशेषणत्वकल्पनात् अतएव वहुधीवरीत्यादौङीप्सिद्धिरितिदिक ॥ १४ ॥

## वक्ष्यमाणेति

ननुवच्धातोःलृटितस्यशानजादेशेस्यविकरणे मुकि सिद्धवक्ष्यमाणलक्ष्ये लृट्गतटित्वमुगित्वंवादाय टिड्ढाणञिति उगितश्चेतिवाङीप्दुर्वारः नचानल्बिधावितिनिषेधः स्यादितिवाच्यम् अनुबन्धकार्य्येऽनल्विधावित्यस्याप्रवृत्तेः नचात्रमानाभावः नल्यपीत्यस्यैवमानत्वादन्यथा प्रदायेत्यादौक्त्वावृत्ति कित्वमादाय प्राप्तस्यघुमास्येति ईत्वस्यवारकं नल्यपीति सूत्रम्व्यर्थमेवस्याद् कित्वस्याल्मात्रवृत्तित्वात् अनुवन्धकार्य्येऽनल्विधावित्यस्याप्रवृत्तत्वादेव रमायामित्यत्राङिवृत्तिङित्वमादाययाट्सिद्धिरितितस्मात् ङीप् दुर्वारइतिचेन्नयासुटोङित्वविधानेन लाश्रयमनुवन्धकार्यं नादेशानामिति ज्ञाप्यतेतेन प्रकृतेदोषाभावादन्यथालिङ्वृत्तिङित्वस्यादेशो सत्वेनतस्ययदागमपरिभाषया यादित्यत्रसत्वेन ङित्वप्रयुक्तकार्यनिर्वाहे किंतेनेति यद्वितुङिच्चपिन्नपिच्चङिन्नेतिभाष्योक्तन्यायेन न यासुटोङित्वं व्यर्थमित्युच्यते तदाहलः श्नशानजिति सूत्रेशानचः शित्वंज्ञापकं क्वचिदनुवन्धकार्येऽनल्विधावित्यस्य प्रवृत्तौतेन नोगित्वंटित्वंवऽतोनङीप्

वस्तुतस्तुशित्वमपितत्रैव सूत्रेभाष्येप्रत्याख्यातं वक्ष्यमाणेत्यत्रङीब्भवत्येव तत्रटापःप्रामाणिकत्वेऽजादौपाठोवाकल्प्यइतिदिक् ॥ १५ ॥

## चौरीति ।

ननु चौरशब्दस्यणप्रत्ययान्तत्वेनाण्प्रत्ययाभावात् कथंङीबिति चेदतआहताच्छीलिकेणेऽपीति ॥ अनयाणप्रयुक्तकार्यस्याणोऽपि विधानेनप्रकृतेदोषाभावः अत्रमानंकार्मःताच्छील्यइति टिलोपनिपातनमन्यथा कर्मणोणप्रत्यये अनइत्यस्याप्राप्तौ नः तद्धितेइति टिलोपे सिद्धेकिंतेनेति दिक् ॥ १६ ॥

## अनपत्याधिकारस्थादिति

ननु द्वैप्येत्यत्र यञश्चेतिङीबभावाय अपत्यग्रहणंकर्तव्यमिति वार्तिकंतेनतत्रङीबभावेऽपि अपत्यार्थकयञ्प्रत्ययन्तदैव्येत्यत्र कथं न ङीबतआहअनपत्येति अयम्भावः उक्तवार्तिकस्यापत्याधिकारस्थय ञ्बोधकत्वेनदैव्यंत्यत्रापत्याधिकारीययञोऽभावान्नदोषइति नचवर्तिकस्योपलक्षणतया व्याख्यानेकिंमानमितिवाच्यम् वार्तिकप्रत्याख्यानपरभाष्यैवमानत्वात् तथाहि कन्रपोऽयञश्चेतपाठेअयञश्चेतिच्छित्वावार्तिकंभाष्येप्रत्याख्यातं गर्गादिभ्योयञित्यत्राञितिच्छेदः द्वीपादनुइत्यत्र देवाद्यञञोरित्यत्र च नायञितिच्छेदः सम्भवतिअतोनङीप्तदैक्यायवार्तिकस्योपलक्षणतया व्याख्यानयुक्तमेवेति ॥ १७ ॥

## विभाषासपूर्वस्येति

नन्वत्रानुपसर्जनाधिकारसत्वात्दृढपत्नीत्यत्रेकारस्यकथंनकारइति चेदत आह अनुपसर्जनस्येतिअयम्भावोऽत्राधिकृतस्यतस्यतदन्तेएवान्वयइति नचगृह्यमाणेएवतस्यान्वय इति वाच्यंसपूर्वस्येत्यनेनतदन्तस्यापिगृह्यमाणत्वात ॥ ननुपतिशब्दान्तस्यैवादेशविधानात्कथं

वृषलस्यपत्नीत्यत्रादेशइतिचेन्न पत्नीकपत्नीत्युपचारात् यद्वाचारक्विबन्तात् कर्तृक्विपि तद्बोध्यम् तदाह अथ वृषलस्येत्यादीति ॥ ननु कुसिद शब्दोह्रस्वमध्यइत्यत्रनमानमितिचेन्न वृषाकपिशब्दोमध्योदत्ताऽन्तोदतोत्वंप्रयोजयतीतिवृत्तिग्रन्थस्यैवमानत्वादन्यथास्यापिदीर्घमध्यत्वे लघावन्तेइति मध्योदातत्वविधानेऽन्तोदात्तत्वप्रयोजकत्वमस्यापिसम्भवति तस्यानुक्तौवृत्तिग्रन्थस्य न्यूनत्वमितिअतो ह्रस्वमध्योऽयमिति तदाह कुसिदशब्दोह्रस्वमध्यो नतु दीर्घमध्यइति ॥ १८ ॥

[illegible]डशब्दस्य जातिवाचकत्वत् जातेरस्त्रीतिङीपिसिद्धेजा[illegible]तसूत्रे कुण्डग्रहणंव्यर्थंसन्नियमार्थंतदाकारश्च कुण्डशब्दात्ङीष्चेत्तर्हिअमत्रेएवेतितेनमनुष्यजातिवाचककुण्डशब्दान्नैवङीषिति चेन्न अमत्रवाचककुण्डशब्दस्यनित्यस्त्रीलिङ्गत्वेनङीषोऽप्राप्तेर्नियमत्वायोगात् तदाह यस्तुअमृकेजारजइत्यादिति ॥ वस्तुतस्तुअस्यनित्यस्त्रीलिङ्गत्वे वलवत्प्रमाणाभावादस्यनियमत्वेनवाधकम् अमृतेजारजेकुण्डेत्येवेति ॥१६॥

## कथंब्रह्माणीति।

ननु इन्द्राणीत्यादिवत् ब्रह्माणीतिप्रयोगोऽपिप्रसिद्धः तस्यसाधुत्वञ्चकथमपि न सम्भवतीतिचेदत आह कथमितअयम्भावः ब्रह्माणीत्यस्यसिद्धिरानुका न भवतिकिन्तु ब्रह्मोपपदकान्धातोः कर्मण्यणितिअणि टिड्ढाणञिति ङीपाबोध्यमिति नचैवंरीत्याइन्द्राणीत्यादीनामपिसिद्धिः स्यात् सूत्रं व्यर्थंस्वरेतु न भेदः ङिज्यपि उदात्त निंवृत्तिस्वरेणान्तोदात्तसिद्धेरिति वाच्यम् इन्द्रस्यस्त्री त्यर्थः इन्द्रीत्यादिप्रयोगवारणाय सूत्रस्यावश्यकत्वादिति दिक् ।२०।

ननु क्वचिन्नधनक्रीतेति न युक्तं सूत्रस्य स्वीयोद्देश्यतावच्छेदकाक्रान्तेऽवश्यंप्रवृत्तिसत्वादितिचेन्न अस्योद्देश्यतावच्छेदकानाक्रान्तत्वात् तथाहिगतिकारकोपपदानामित्यस्यानित्यत्वादप्रवृत्तौऽन्तरङ्गत्वा

टापिसुपि ॥ कर्तृकरणेकृताबहुलमितिसू
त्रिरिति वस्तुतस्तु गतीत्यादे रनि
पाठो बोध्यः ॥ २१ ॥

ननु इतोमनुष्यजातेरित्यत्रेतइत्यस
न युक्तंतित्तिरिः ककुभोलावइति क्रोशात्
स्त्रीपुंसयोरपत्यान्ताः द्विचतुः षट्पदो
पिप्रतीतेः ॥ २२ ॥

इति स्त्रीप्रत्यय

श्रीसीतारामार्पण



